उद्धेदभिश्रुतामाऽ६घाम्॥ वृषभन्नर्या। हिम्। पाऽ२३४साम्॥ आस्ताऽ३उवा॥ रामाइ।

षिसूऽ२३४वा। राऽ५योऽ६हाइ॥

(दी. ४। प. ८। मा. ६) २५ (दू।२०५)

(१२५।३) ॥ विलम्बसौपर्णं शरुप्रवेतसं वा॥

उद्धेदभिश्रुतामघम्। ईयइयाहाइ॥ वृषभन्नर्या। हाऽ३हाऽ३इ। पाऽ२३४साम्।

आस्ताऽ३उवाऽ३॥ राऽ२माऽ२३४औहोवा॥ षिसूरियाऽ२३४५॥

(दी. ६। प. ८। मा. ७) २६ (गे।२०६)

(१२६।१) ॥ शाकलम्। शकलो गायत्री, इन्द्रसूर्यौ॥

यदद्यकाऽ५च्चवृत्रहान्॥ उदगाअभिसूराऽ२३या॥ सार्वाऽ२म्॥ तादिन्द्रतायेऽ३। हिम्।

वाऽ३४५शोऽ६हाइ॥

(दी. २। प. ६। मा. ५) २७ (चु।२०७)

(१२७।१) ॥ आभरद्वसवे द्वे। द्वयोराभरद्वसुर्गायत्रीन्द्रः॥

यआहाउ॥ आनायाऽ२त्। आनायाऽ२३त्। पाराऽ२वाऽ२३४ताः। सुनीतीतूऽ२।

सुनीतीतूऽ२३। वाशंयाऽ२३४दूम्॥ इन्द्रस्सानाऽ२ः। इन्द्रस्सानाऽ२३ः॥

यूऽ२वाऽ२३४औहोवा॥ साऽ२३४खा॥

(दी. ४। प. ११। मा. ९) २८ (तो।२०८)

(१२७।२)

यआनयत्। परावाऽ६ताः॥ सुनीतीतुर्वश्नाऽ१०याऽ३दूम्। इन्द्रस्सनोयुवाऽ१साऽ३खा।

इन्द्रोऽ२३४ग्नाइ॥ इन्द्राऔऽ३होऽ२३४। ग्नाइ॥ आइन्द्रोआ। ग्नाऽ२। याऽ२३४औहोवा॥

ईऽ२३४०द्राः॥

(दी. ८। प. ११। मा. ११) २९ (ट।२०९)

(१२८।१) ॥ तान्वे द्वे। द्वयोस्तन्वो गायत्रीन्द्रः॥

मानइन्द्राभियादाइशाः॥ सूरोअक्तु। षुवायाऽ२३माऽ३४त्॥ तुवाऽ३४युजा॥

वनाइमाऽ२३ताऽ३४३त्। ओऽ२३४५इ॥ डा॥

(दी. ५। प. ७। मा. ८) ३० (फै।२१०)

(१२८।२)

मानाऽ३आऽ३इन्द्राभियादिशाः॥ सूरोआऽ२३४क्तू। षूआयाऽ२३४मात्॥ त्वायुजावनौऽ३हो॥

मतौऽ२। हुवाइ। औऽ३होऽ२३४५वाऽ६५६॥ एऽ३। ययूऽ२३४५ः॥

(दी. ५। प. ९। मा. ८) ३१ (भै।२११)

॥ इति ग्रामे गेय-गाने तृतीयः प्रपाठकः॥

(१२९।१)     ॥ रोहितकूलीये द्वे। द्वयोरिन्द्रो विश्वामित्रो वा गायत्रीन्द्रः॥

एन्द्रसा॥ नसिंश्रयिम्। सजित्वानश्सदासाऽ२३हाम्॥ वाऽ२३र्षी॥ ष्ठामूतयाऽ३१उवायेऽ३।

भाऽ२३४रा॥

(दी. ४। प. ६। मा. ३) १ (ति।२१२)

(१२९।२)

एन्द्रसानसाइम्॥ रयाऽ२इम्। सजित्वानश्सदासाऽ२३हाम्॥ वार्षीऽ२ष्ठामूऽ२३॥

तयोऽ२३४वा। भाऽ५रोऽ६हाइ॥

(दी. ४। प. ६। मा. ६) २ (तू।२१३)

(१४०।१)      ॥ इन्द्राण्याः सामनी द्वे। द्वयोरिन्द्राणी गायत्रीन्द्रः॥

इन्द्राम्। इन्द्रंवायाऽ२म्॥ महा। महाधानाऽ२इ॥ इन्द्राम्। इन्द्रमर्भाऽ२इ॥ हवा।

हवामाहाऽ२इ॥ युजाम्। युजंवृत्राऽ२इ॥ षुवा। षुवज्रिणाऽ२३४३म्। ओऽ२३४५इ॥ डा॥

(दी. २। प. १४। मा. १०) ३ (झौ।२१४)

(१३०।२)

इन्द्रंवयाम्॥ महा। महाधानाऽ२३इ। आऔऽ३हो। इह। इहिवाला। ओऽ२३४वा॥

इन्द्रमर्भाइ॥ हवा। हवामाहाऽ२३इ। आऔऽ३हो। इह। इहिवाला। ओऽ२३४वा॥

युजंवृत्राइ॥ षुवा। षुवज्रिणाऽ२३म्। आऔऽ३हो। इह। इहिवाला। ओऽ२३४वा॥

ईऽ२३४हा॥

(दी. २। प. २२। मा. ९) ४ (छो।२१५)

(१३१।१) ॥ सहस्रवाहवीयम्। इन्द्रो गायत्रीन्द्रः॥

अपिबत्काद्रूऽ६वस्सुताम्॥ इन्द्राहोऽ२इ। सहाहोऽ२। स्राबाऽ१हुवेऽ२॥ तत्रादाऽ२३दी॥

ष्टपौऽ२। हौऽ२। हुवाऽ२इ। ईऽ३या। सियाम्। औऽ२३होवा। होऽ५इ॥ डा॥

(दी. २। प. १३। मा. ५) ५ (जु।२१६)

(१३२।१) ॥ धृषतो मारुतस्य साम। मारुतो गायत्रीन्द्रः॥

वयमाऽ२३४इन्द्रा॥ त्वाऽ२३। याऽ२वाऽ२३४औहोवा। अभिप्रनोऽ२नुमोवृषन्॥

विद्धाइतुवाऽ३॥ स्याऽ२नाऽ२३४औहोवा॥ वाऽ२३४सो॥

(दी. ६। प. ७। मा. ५) ६ (खु।२१७)

(१३२।२) ॥ अदारसृत् (द्वे)। भरद्वाजो गायत्रीन्द्रः॥

हाउवयमिन्द्रा॥ त्वाऽ२यावाऽ२ः। अभिप्रनोनुमोऽ२वार्षाऽ२न्। विद्धाऽ२इतूवाऽ२॥ स्यनोऽ२३।

वाऽ२साऽ२३४औहोवा॥ अस्मभ्यंगातुवित्तमाऽ२३४५म्॥

(दी. ५। प. ७। मा. ६) ७ (फू।२१८)

(१३२।३) ॥ मारुतस्य साम। मारुतो गायत्रीन्द्रः॥

वयमिंद्रा॥ त्वायाऽ३वाः। अभिप्रनोनुमोऽ१वाऽ३र्षान्॥ विद्धीतूऽ२३४वा। ओऽ२३४हाइ॥

स्यनोवा। वाऽ५सोऽ६हाइ॥

(दी. १। प. ७। मा. ४) ८ (खी।२१९)

(१३२।४) ॥ अदारसृती द्वे। द्वयोर्भरद्वाजो गायत्रीन्द्रः॥

वयामौहो। इन्द्रा॥ त्वायाऽ३वाः। अभिप्रनोनुमोऽ१वाऽ३र्षान्॥ विद्धीत्वोऽ२३४हाइ॥

स्यानोऽ३हाइ। वसा। औऽ३होवा। होऽ५इ॥ डा॥

(दी. ४। प. १०। मा. ५) ९ (नु।२२०)

(१३२।५)

वयामौहोवाहाइ। इन्द्रा। त्वाऔहोवाहाइ। यावाः॥ आऽ२३भी। प्राऽ२३नो।

ओइनुमोवाऽ२३र्षान्॥ वाऽ२३इद्धी। तूऽ२३वाऽ३॥ स्याऽ२नाऽ२३४औहोवा॥ वाऽ२३४सो॥

(दी. ५। प. ११। मा. ८) १० (पै।२२१)

(१३३।१) ॥ ऐध्मवाहानि-हाराणि वा त्रीणि। त्रयाणामिध्मवाहो गायत्रीन्द्रः॥

आघायेअग्निमिन्धाताइ॥ स्त्रिणन्तिबर्हिरानुषाक्॥ येषामिन्द्रोयुवाइहा॥ ऊऽवाइ॥ ऊवोऽ२३४।

वा। साऽ५खोऽ६हाइ॥

(दी. ८। प. ७। मा. ६) ११ (ठू।२२२)

(१३३।२) ॥ इहवदैध्मवाहम्॥

आघायइहा॥ ग्निमाइ। धाताओऽ२३४वा। ईऽ२३४हा। स्त्रिणन्तिबर्हिऽ३रा।

नूषाओऽ२३४वा। ईऽ२३४हा॥ येषाम्। आइन्द्राओऽ२३४वा॥ ईऽ२३४हा। युवा।

युवाऽ२साऽ२३४५खाऽ६५६॥ ईऽ२३४हा॥

(दी. ३। प. १३। मा. ७) १२ (डे।२२३)

(१३३।३)

औहोआघायाऽ६ए॥ ग्निमाइन्धाता। औहोऽ२३४वा। स्तृणंतिबर्हिऽ३रानूषा। औहोऽ२३४वा॥ येपामाइंद्रा। औहोऽ२३४वा॥ युवाऽ३। साऽ२३४खा। उहुवाऽ६हाउ॥ वा॥

(दी. ८। प. ११। मा. ५) १३ (टु।२२४)

(१३४।१) ॥ पैड्वस्य पैल्वस्य वा साम। पैल्वो गायत्रीन्द्रः॥

भि। ध्योहाइ॥ वाइश्वाअपा। द्वाइषाओऽ२३४वा॥ पाराओऽ२३४वा॥ बाधोजहाइ। मार्द्धाओऽ२३४वा॥ वसुस्पार्हतदाभराऽ२३४५॥

(दी. ४। प. ८। मा. ८) १४ (दै।२२५)

द्वाविंशतिर्द्वितीयः, द्वितीयः खण्डः॥२॥ दशतिः॥२॥

(१३५।१) ॥ ऐषम्। इषो गायत्रीन्द्रः॥

इहेवाऽ२३४श्रृण्वएषाम्॥ कशाहस्तेषुयाऽ१द्वाऽ३दान्। नियामंचीऽ३त्राऽ३मृञ्जताइ॥ नियामंचाइ। त्रमाऽ२र्ञाऽ२३४ताइ॥ एहियाऽ३४। औहोवा॥ एहियौहोइ। एहियौहोऽ२३इ। एऽ२३४ही॥

(दी. १३। प. १०। मा. ८) १५ (णे।२२६)

(१३६।१) ॥ पौषम्। पूषा गायत्रीन्द्रः॥

इमउत्वाविचक्षते। एऽ३। सखायाः॥ इन्द्रसोमाऽ२३इनाः॥ होइहोवा॥ पुष्टावाऽ२३०ताः। होइहोवाऽ३॥ यथोऽ२३४वा। पाऽ५शोऽ६हाइ॥

(दी. ४। प. ९। मा. ८) १६ (धे।२२७)

(१३७।१) ॥ मरुतां संवेशीयम्, सिन्धुषाम वा। मरुतो गायत्रीन्द्रः॥

समस्यामाऽ२। न्यावेविशाः॥ विश्वानामाऽ२। ताकृष्टयाः॥ समुद्रायेऽ२॥ वसिंधाऽ२३वाऽ३४३ः।

ओऽ२३४५इ॥ डा॥

(दी. ४। प. ८। मा. ४) १७ (दी।२२८)

(१३८।१) ॥ हाविष्मते द्वे। द्वयोर्हविष्मान् गाय्त्रीन्द्रः (विश्वेदेवा वा)॥

देवा। नाम्। इदाओऽ२३४वा॥ ओवाओऽ२३४वा॥ माऽ२३४हात्। तदावृणाइ।

माहाओऽ२३४वा। वाऽ२३४याम्॥ वृष्णामस्मा॥ भ्यामाओऽ२३४वा॥ ताऽ२३४ये॥

(दी. ५। प. ११। मा. ८) १८ (पै।२२९)

(१३८।२)

हाउदेवानामिदवोमहद्धाउ॥ तदावृणाऽ३इ। माहेवाऽ२३४याम्। ऐऽ२होऽ१आऽ२३इही॥

वृष्णामाऽ३स्मा॥ भ्यमूऽ२३। ताऽ२याऽ२३४औहोवा॥ हविष्मतेऽ२३४५॥

(दी. ८। प. ८। मा. ७) १९ (डे।२३०)

(१३८।३) ॥ हाविष्कृते द्वे। द्वयोर्विष्कृद्गायत्रीन्द्रः (विश्वेदेवा वा)॥

देवानामिदवोहाउमाहात्॥ तदावृणाइ। महाइवाऽ२३याम्॥ वृष्णाऽ२होऽ१इ।

आऽ२३स्मा॥ भ्यमूऽ२३। ताऽ२या२३४औहोवा॥ हविष्कृतेऽ२३४५॥

(दी. ८। प. ८। मा. ७) २० (डे।२३१)

(१३८।४)

देवानामिदवोमाहात्॥ तादावृणी। महाइवाऽ२३याम्। वृष्णामाऽ२३स्माऽ३॥ भ्यमूऽ२३४वा।

ताऽ५योऽ६हाइ॥

(दी. ७। प. ६। मा. ४) २१ (ची।२३२)

(१३९।१) ॥ काक्षीवतम्। कक्षिवान् गायत्रीन्द्रः ब्रह्मणस्पतिर्वा॥

सोमाऽ३नाँ२स्वरणाम्॥ कृणूहिब्र। ह्मणस्पतायेऽ३। ओऽ३४। हाहोइ॥ कक्षाइवाऽ२३०ताम्॥

यऔहोइ। औहोऽ२३४वा। श्राऽ५इजोऽ६हाइ॥

(दी. ५। प. ९। मा. ८) २२ (भै।२३३)

(१४०।१) ॥ औषसम्। उषो गायत्रीन्द्रः॥

बोधन्मनाः॥ इदाऽ२स्तूनाऽ२ः। वृत्रहाभू। रियाऽ२सूऽ२३४तीः॥ शृणाऽ३४औहो॥

तुश्रऋआ। श्रि। षाम्। औऽ२३होवा। होऽ५इ॥ डा॥

(दी. २। प. ११। मा. ७) २३ (चे।२३४)

(१४१।१) ॥ दक्षणिधनमौक्षं। भरद्वाजो गायत्रीन्द्रः सविता वा॥

अद्यनोदेवसवितः। औहोवा॥ इहश्रुधाइ। प्रजावाऽ२३त्सा। वीःसौभगाम्॥

परादूऽ२३ष्वाऽ३। होवाऽ३हा॥ प्रियऽ२सूऽ२३४५वाऽ६५६॥ दक्षाऽ३याऽ२३४५॥

(दी. ८। प. ९। मा. ३) २४ (ढि।२३५)

(१४१।२) ॥ मौक्षम्। भरद्वाजो गायत्रीन्द्रः सविता वा॥

अद्याऽ३४। नोदेवसा। विताः॥ प्रजावत्सा। वीःसौभगाम्॥ पाराऽ३दूष्वा॥

प्रियऽ२सुवोवाऽ३। ओऽ२। वाऽ२३४। औहोवा॥ अस्मभ्यंगातुवित्तमाऽ२३४५म्॥

(दी. ९। प. ११। मा. ३) २५ (ति।२३६)

(१४२।१) ॥ भारद्वाजानि आर्षभाणि त्रीणि। त्रयाणां भरद्वाजो गायत्रीन्द्रः॥

कूऽ२३४वस्यवाऽ५र्षभोयुवा॥ तुविग्रीवोऽ२। अनानताः॥ ब्रह्माकाऽ२३स्ताम्॥

ऐऽ२होऽ१आऽ२३इही। सपर्याऽ२३ताऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ३। प. ८। मा. ६) २६ (डू।२३७)

(१४२।२)

कुवाकुवा॥ स्यवृषऽ३भोयुवाऽ३। ओऽ३४। हाहोइ। तुविग्रीवोअऽ३नानताऽ३ः।

ओऽ३४। हाहोइ॥ ब्रह्माऽ२३॥ काऽ२स्ताऽ२३४औहोवा। सपर्यतीऽ२३४५॥

(दी. ६। प. १०। मा. ५) २७ (ङु।२३८)

(१४२।३)

ऐहीयैही। क्वस्यवृषभोयुवा॥ ऐहीयैही। तुविग्रीवोअनानताः॥ ऐहीयैही। ब्रह्माकस्त२सपर्यती॥

ऐहीयैही। आऽ२इ। हियाऽ३४औहोवा॥ आऽ२३४इही॥

(दी. २३। प. १०। मा. ५) २८ (णु।२३९)

(१४३।१) ॥ शाक्त्यसामनी द्वे। द्वयोः शाक्त्यो गायत्रीन्द्रः॥

उपह्वराइ। गिराऽ२इणाम्॥ संगामेचा। नदाऽ२इनाम्॥ धियाविप्रो। अजायता॥ अयाम्।

अयाऽ३१उ। वाऽ२३॥ ऊऽ३४पा॥

(दी. १। प. १०। मा. ७) २९ (ञो।२४०)

(१४३।२)

इदामीऽ२३४दाम्। इदामिदकम्। इदामीऽ२३४दाम्। उपह्वरेगिऽ३राइणाम्॥

इदामीऽ२३४दाम्। इदामिदकम्। इदामीऽ२३४दाम्। संगमेचनऽ३दाइनाम्॥

इदामीऽ२३४दाम्। इदामिदकम्। ईदामीऽ२३४दाम्। धियाविप्रोअऽ३जायाता॥

इदामीऽ२३४दाम्। इदामिदकम्। इदाऽ३माऽ५इदाऽ६५६म्॥ गोष्पदेपृट्॥

(दी. ६। प. १६। मा. १९) ३० (को।२४१)

(१४४।१) ॥ वार्षधरे द्वे। द्वयोर्वृषंधारो गायत्रीन्द्रः॥

प्रसंम्राजाम्॥ चार्षाऽ२णाइनाऽ२म्। आइन्द्राऽ२ऽस्तोताऽ२३। नव्याऽ२ऽगाऽ२३४इर्भीः॥

नाराऽ२न्नार्षाऽ२३॥ हम्मोवा। हाऽ५इष्ठोऽ६हाइ॥

(दी. १। प. ७। मा. ८) ३१ (खै।२४२)

(१४४।२)

प्रसंम्राजोहाइ॥ चार्षाणीऽ३नाम्। आइन्द्राऽस्तोऽ३ताऽ३। नव्याऽ२ऽगाऽ२३४इर्भीः॥

नारमोइ। नृ। षाहमोऽ३इ॥ मऽहाऽ५इष्ठाम्। होऽ५इ॥ डा॥

(दी. २। प. १०। मा. १०) ३२ (जौ।२४३)

(१४४।३) ॥ कुत्सस्य प्रस्तोकौ द्वौ। द्वयोः कुत्सो गायत्रीन्द्रः॥

प्रसंम्राजंच। षणाऽ३२३४इनाम्॥ इन्द्राऽस्तोऽ३ताऽ३। नव्याऽ२ऽगाऽ२३४इर्भीः॥

नरंनृषाहंमाऽ५ऽहि। आऽ६हाउवा॥ ष्ठाऽ२३४५म्॥

(दी. २। प. ७। मा. ६) ३३ (छू।२४४)

(१४४।४)

प्रसंम्राजंचर्षणीनामिन्द्रऽस्तोतान। व्यंगाऽ६इर्भीः॥ इन्द्रऽस्तोतानव्यंगाऽ२३इर्भीऽ३४ः॥

नरंनृषाहम्। माऽ५ऽहिष्ठाम्॥ सहमैहेऽ३होऽ२। याऽ२३४औहोवा॥ मऽहिऽ३ष्ठाऽ२३४५म्॥

(दी. १२। प. ८। मा. ८) ३४ (जै।२४५)

विंशतिस्तृतीयः तृतीयः खण्डः॥३॥ दशतिः॥३॥

॥ इति ग्रामे गेय-गाने चतुर्थस्यार्द्धः प्रपाठकः॥

(१४५।१) ॥ औपगवे द्वे। द्वयोरुपगुर्गायत्रीन्द्रः॥

अपादुशी॥ प्रियंधसाः। सुदक्षाऽ२३स्या। प्रहोषिणः॥ इन्दोराऽ२३इन्द्राः॥ यवाशाऽ२३इराः।
ऐ। हियाऽ२इ। हियाऽ३४औहोवा॥ एऽ३। उपाऽ३१२३४५॥

(दी. ७। प. ११। मा. ८) १ (चै।२४६)

(१४५।२) ॥ औपगवोत्तरं सौश्रवसं वा॥

अपादूऽ३शिप्रियंधसाः॥ सुदक्षस्यप्रहोषिणाः। इन्द्रौऽ२। हौऽ२। हुवाऽ२३इ। आऽ३४इन्द्रो॥
यवाशाइराः। ऐ। हाऽ२एऽ२३। हियाऽ३४औहोवा॥ एऽ३। उपाऽ३१२३४५॥

(दी. ६। प. १२। मा. ८) २ (खै।२४७)

(१४६।१) ॥ त्वाष्ट्रीसाम। त्वष्टा गायत्रीन्द्रः॥

इमाउत्वा॥ पुरूऽ२वासाऽ२उ। अभिप्रनोनवूऽ२र्गाइराऽ२ः॥ औहोऽ१इ। गावोवात्साऽ२३म्।
नाऽ२३धेऽ३। नाऽ३४५वोऽ६हाइ॥

(दी. ५। प. ७। मा. ७) ३ (फे।२४८)

(१४७।१) ॥ त्वष्टुरातिथ्ये द्वे। त्वष्टा गायत्रीन्द्रः (त्वष्टुचन्द्रमसौ वा)॥

आत्रा॥ हागोरमन्वताउवाऽ२३। होवाऽ२३होइ॥ नामत्वष्टुरपीचियाउवाऽ२३। होवाऽ२३होइ॥
इत्थाचन्द्रमसोगृहाउवाऽ२३। होवाऽ२३होऽ२। वाऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. ८। प. ९। मा. ६) ४ (द्वू।२४९)

(१४७।२)

हावात्रा॥ हागोरमन्वताउवाऽ२३। होइयाऽ२३। हाऽ२ऊवाइ॥

नामत्वष्टुरपीचियामियाउवाऽ२३। होवाऽ२३हाऽ२ईया॥ इत्थाचन्द्रमसोगृहाउवाऽ२३।

होइयाऽ२३। हाऽ२ऊवाऽ२। याऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. ८। प. १०। मा. १०) ५ (ण्वौ।२५०)

(१४८।१) ॥ पौषे द्वे। द्वयोः पूषा गायत्रीन्द्रः पूषणौ॥

यदिन्द्रोया॥ नायाऽ२३त्। ओमोऽ३म्। ओवा। रितोमहीरापाऽ२३ः। ओमोऽ३म्। ओवा॥

वृषावृषाऽ२। तमाऽ३४औहोवा॥ तत्रपूषाभुवत्सचाऽ२३४५॥

(दी. ७। प. १०। मा. ५) ६ (जु।२५१)

(१४८।२)

यदिन्द्रोअन्यद्रिताऽ६ए॥ महीरापाऽ२ः। महीरापाऽ२३ः। वार्षताऽ२३४माः॥ तत्रापूषाऽ३॥

पूऽ२षाऽ२३४औहोवा॥ भुवत्सचाऽ२३४५॥

(दी. ५। प. ७। मा. ६) ७ (फू।२५२)

(१४९।१) ॥ श्यावाश्वे द्वे। द्वयोः श्यावाश्वो गायत्रीन्द्रः (मरुतो वा)॥

गौर्द्धयाऽ६ए॥ तिमरुताऽ३म्। श्रवास्युर्माऽ३। तामघोऽ२३४नाम्॥ युक्तावह्वाइः॥ रथाऽ३।

नाऽ२माऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. ३। प. ८। मा. ६) ८ (डू।२५३)

(१४९।२)

गौर्द्धयतिमरुताऽ६मे॥ श्रवास्युर्माऽ२तामघोनाऽ२म्। उहुवाऽ२३हाइ॥ युक्तावाऽ२३ह्णीः॥

उहुवाऽ२३हाइ। रथानाम्। औऽ२३होवा। होऽ५इ॥ डा॥

(दी. ७। प. ९। मा. ६) ९ (झ्रू।२५४)

(१५०।१) ॥ सुतंरयिष्ठीये द्वे। द्वयोः प्रजापतिर्गायत्रीन्द्रः॥

उपनोऽ२३हरिभिस्सुतोवा॥ याहिमदाऽ३ना०प। ताऽ२३इ॥ उपनोऽ३। हाऽ३ओऽ२३४वा॥

राऽ२३४ईभी। सुताम्। औऽ२३होवा। होऽ४इ॥ डा॥

(दी. २। प. १०। मा. ६) १० (ञ्रू।२५५)

(१५०।२)

उपनोहाहोहा। राइभीः॥ सूऽ२३ताम्। याहिमदा। नांपाऽ२३ताइ॥ उपानोऽ२३४हा॥

राऽ२इभाऽ२३४औहोवा॥ सुतꣳरयिष्ठाऽ२३४५ः॥

(दी. ६। प. ८। मा. ७) ११ (गे।२५६)

(१५१।१) ॥ इष्टाहोत्रीयं अप्सरसं वा अपांनिधिर्वा। इष्टाहोत्रा अप्सरसो वा गायत्रीन्द्रः॥

इष्टाहोत्राः॥ आसृक्षाऽ२३४ता। इन्द्रंवृधा। तोऽ२ध्वाऽ२३४राइ॥ आच्छाऽ३वोभृ॥

थमोऽ३जाऽ५साऽ६५६॥ एऽ३। उदधिर्न्निधीऽ१ः॥

(दी. १। प. ८। मा. ३) १२ (गि।२५७)

(१५२।१)॥ प्राजापतेर्निधनकामं सिन्धुषाम वा। प्राजापतिर्गायत्रीन्द्रः सूर्यो वा॥

अहमिद्धाऽ५इपितुःपराइ॥ मेधामृतस्यजग्रहा॥ अह२ंसूर्याः। इवाऽ२३४। हाहोइ॥ जनि।
होइ। होइ। औहोऔहोवाऽ२३४५हाउ॥ वा॥

(दी. ७। प. १०। मा. ८) १३ (जै।२५८)

(१५३।१) ॥ रेवत्यः वाजदावर्यो वा। वाजदावर्यो गायत्रीन्द्रः॥

रेवतीर्नाः॥ सधाऽ२माऽ२३४दाइ। इन्द्राऽ२इसाऽ२३४०तू। तुविवाऽ२जाः॥ क्षूऽ२३मा॥
तोऽ२या। भिर्मोऽ२३४वा। दाऽ५इमोऽ६हाइ॥

(दी. २। प. ८। मा. ६) १४ (जू।२५९)

(१५४।१) ॥ सौमपौषं गोअश्वीयं वा। सोमपूषावृषी गायत्रीन्द्रः॥

सोमःपूषा॥ चचाइततुः। अयायोऽ२३४वा। वाइश्वासा२ंसुक्षिती। नाम्। अयायोऽ२३४वा॥
दाइवत्राराऽ२३॥ थियोऽ३र्हाऽ५इताऽ६५६॥ गावोऽ२अश्वाऽ२३४५ः॥

(दी. ७। प. ९। मा. ८) १५ (झ्रौ।२६०)

पञ्चदश चतुर्थः खण्डः॥४॥ दशतिः॥४॥

(१५५।२) ॥ वैतहव्यानि त्रीणि अध्यर्द्धेड वैतहव्यम्। त्रयाणां वीतहव्योऽनुष्टुबिन्द्रः॥

पान्तमावोअन्धसाः॥ इन्द्रामाभि। प्रगायाताऽ३। हाऽ३हाइ। विश्वासाहम्। शताक्रातूऽ३म्।
हाऽ३हाइ॥ म२ंहाइष्ठंचाऽ३। हाऽ३हा॥ षणाऽ२इ। नाऽ२३४औहोवा॥ ऊऽ३२३४पा॥

(दी. ५। प. १२। मा. ९) १६ (फ्रो।२६१)

(१५५।२) ॥ इहवद्वामदेव्यम्॥

पान्तमावोअन्धसः। इहा॥ इन्द्रमभाइ। प्रगायताऽ२। इहा। विश्वासाहंशताऽ२क्रतूम्।
इहा॥ मंहाऽ२इषंचा। इहा॥ षणाऽ२इनाम्॥ इहाऽ२३४५॥

(दी. ६। प. ११। मा. ७) १७ (के।२६२)

(१५५।३) ॥ ओकोनिधनं वैतहव्यम्॥

पाऽ५न्तम्। आऽ३वोऽ३अन्धसाः॥ आइन्द्रामभाइ। प्रगाऽ२याऽ२३४ता।
विश्वाऽ२साऽ२३४हाम्॥ शाऽ३ताक्राऽ३तूम्॥ मंहिषंचर्षे। णायेऽ३।
नाऽ२माऽ२३४औहोवा॥ ओऽ३काऽ२३४५ः॥

(दी. २। प. १०। मा. ९) १८ (ञो।२६३)

(१५६।१) ॥ शाक्त्यानि षट्, शाक्त्ये सामनी द्वे। षण्णां शक्त्यो गायत्रीन्द्रः॥

प्रवइन्द्राऽ२। यमादाऽ२३४नाम्॥ प्रवाऽ२इन्द्रा। औऽ३हो। याऽ२३४मा॥ दाऽ३नाम्॥
हराऽ२अश्वा। औऽ३हो। याऽ२३४गा॥ याऽ३ता॥ सखाऽ२याःसो। औऽ३होऽ३।
मापोऽ२३४वा। आऽ५न्नोऽ६हाइ॥

(दी. नास्ति। प. १४। मा. ६) १९ (लू।२६४)

(१५६।२)

प्रवाऽ२इन्द्रा। औऽ३हो। याऽ२३४मा। दाऽ३नाम्। हराऽ२अश्वा। औऽ३हो। याऽ२३४गा।
याऽ३ता॥ सखाऽ२यास्सो। औऽ३होऽ३॥ मापोऽ२३४वा। आऽ५न्नोऽ६हाइ॥

(दी. नास्ति। प. १२। मा. ४) २० (यी।२६५)

(१५६।३) ॥ गौरीविते द्वे॥

प्रवईऽ३या। ईऽ३या। इन्द्रोईऽ३या। ईऽ३या। याऽ२३४मा। दाऽ३नाम्॥ हरईऽ३या।
ईऽ३या। आश्वोईऽ३या। ईऽ३या। याऽ२३४गा। याऽ३ता॥ सखईऽ३या। ईऽ३या।
यास्सोईऽ३या। ईऽ३याऽ३॥ मापोऽ२३४वा। आऽ५न्नोऽ६हाइ॥

(दी. ३। प. १८। मा. ८) २१ (डै।२६६)

(१५६।४)

प्रवौहोवाऽ२। इन्द्रौहोवा। याऽ२३४मा। दाऽ३नाम्॥ हरौहोवाऽ२। आश्वौहोवा।
याऽ२३४गा। याऽ३ता॥ सखौहोवाऽ२। यास्सौहोवाऽ३॥ मापोऽ२३४वा। आऽ५न्नोऽ६हाइ॥

(दी. ६। प. १२। मा. २) २२ (खा।२६७)

(१५६।५) ॥ शाक्त्यं साम॥

प्रवोदऽ३दा। औऽ३हो। इन्द्रोददा। औऽ३हो। याऽ२३४मा। दाऽ३नाम्॥ हरिदऽ३दा।
औऽ३हो। आश्वोददा। औऽ३हो। याऽ२३४गा। याऽ३ता॥ सखिदऽ३दा। औऽ३हो।
यास्सोददा। औऽ३होऽ३॥ मापोऽ२३४वा। आऽ५न्नोऽ६हाइ॥

(दी. ४। प. १८। मा. २) २३ (दा।२६८)

(१५६।६) ॥ गौरीवीतम्॥

प्रवः। प्रवाः॥ इन्द्रायेन्द्रा। यमादाऽ१नाऽ२म्। हराइहर्यश्वा। यगायाऽ१ताऽ२॥
सखायाऽ२३स्सोऽ३॥ मापोऽ२३४वा। आऽ५न्नोऽ६हाइ॥

(दी. ५। प. ९। मा. ५) २४ (भु।२६९)

(१५७।१) ॥ काण्वे द्वे। द्वयोः कण्वो गायत्रीन्द्रः॥

वयंवायाम्॥ ऊऽ२३४ब्वा। तादीदाऽ२३४र्थाः। इन्द्रब्वायन्तः। सखाऽ२३४याः॥

कण्वाऽ३१२३४ः॥ उक्थेभिर्जरन्ते। एहियाऽ६हा। होऽ५इ॥ डा॥

(दी. ४। प. १०। मा. ६) २५ (नू।२७०)

(१५७।२)

वयमूऽ३ब्वातदिदर्थाः॥ ऐहिहाऽ२इ। वयमुब्वातदिदर्थाइन्द्रब्वायन्तस्सखाऽ२३याः॥

काऽ२३४ण्वाः॥ ऊ। क्थाइ। भिर्जोऽ२३४वा॥ रन्ताऽ३याऽ२३४५॥

(दी. ५। प. ८। मा. ६) २६ (बू।२७१)

(१५८।१) ॥ गौरीविते द्वे। द्वयोर्गौरीवितो गायत्रीन्द्रः॥

इन्द्रायमद्वनाइ॥ सुताम्। इन्द्रायमद्वनेसुताम्। पराइष्टोऽ२३भा। तुनोगिरो॥ अर्कमाऽ२३र्चा॥

तुकाराऽ२३वाऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ५। प. ९। मा. ६) २१ (भू।२७२)

(१५८।२)

इन्द्रायमद्वनेहाउ॥ ओइसूऽ३ताम्। परिष्टो। भा। तुनोऽ२३हाइ। गाइराऽ२ः। परिष्टोभा।

तुनोऽ२३हाइ॥ गाइराऽ२ः॥ अर्काऽ२३म्॥ आऽ२र्चाऽ२३४औहोवा॥ एऽ३।

तुकाऽ३रवाऽ२३४५ः॥

(दी. ६। प. १३। मा. १२) २८ (गा।२७३)

(१५८।३) ॥ श्रौतकक्षम्। श्रुतकक्षा गायत्रीन्द्रः॥

इन्द्रायमद्वनेसुतम्। इन्द्रायमोवा॥ द्वाऽ३नाइसूऽ३ताम्। परिष्टो। भाऽ२३। हाऽ३हाऽ३। तूनोऽ२गाऽ२३४इराः॥ आर्कमर्चाऽ३। हाऽ३हा॥ तुकाराऽ२३वाऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ५। प. १२। मा. ७) २९ (फे।२७४)

(१५९।१) ॥ सौमित्रे द्वे। द्वयोः सुमित्रो गायत्रीन्द्रः॥

अयंतआ॥ द्रसोमो। होवाऽ३होइ। निपूतोआऽ३। धीबर्हाऽ२३४इषी॥ आइहीमस्याऽ२३॥ द्राऽ२वाऽ२३४औहोवा॥ पीऽ२३४बा॥

(दी. ६। प. ८। मा. ६) ३० (गू।२७५)

(१५९।२)

अयंतइन्द्रसोऽ४माः॥ निपूतोअधिवाऽ२र्हाइषीऽ२। ऐहोऽ२इमास्या॥ द्रवापाइवाऽ२। आइहीमस्याद्रवाऽ३१उवाऽ२३॥ पीऽ२३४बा॥

(दी. ५। प. ६। मा. ८) ३१ (पै।२७६)

(१५९।३) ॥ इहवद्दैवोदासम्। दिवोदासो गायत्रीन्द्रः॥

अयंतइन्द्रसोऽ४मः। नाऽ२३४इ। पूतोअधिबर्हिषी॥ निपूतोअधिबर्हाऽ२३इषी॥ ऐहोइमाऽ२३स्या॥ द्रवापाऽ२३४५इबाऽ६५६॥ ईऽ२३४हा॥

(दी. ६। प. ७। मा. ८) ३२ (खे।२७७)

(१६०।१) ॥ शाक्वरवर्णम्। शाक्वरवर्णो गायत्रीन्द्रः प्रजापतिर्वा॥

सुरू॥ पकृत्नुमूतयाइ। सुदुघाम्। इवगोऽ२। दुहयाऽ३१उवाऽ२३। ऊऽ३४पा॥

जुहूमाऽ२३सी॥ द्यविद्यवियाऽ३१उवाऽ२३॥ ऊऽ३२३४पा॥

(दी. ३। प. ९। मा. ४) ३३ (ड्डी।२७८)

(१६०।२) ॥ रैवतम्। रेवतो गायत्रीन्द्रः (रैणवम्। रेणुर्गायत्री प्रजापतिर्वा)॥

सुरूहाहाउ॥ पकृत्नुमूऽ२तायाऽ२इ। सुदुघाम्। इवगोऽ२। दुहे। ऐहीयैहीऽ१॥ जुहौऽ२।

हौऽ२। हुवाऽ२इ। मासीऽ२॥ द्यविद्यवि॥ ऐहीयेहीऽ१॥

(दी. १०। प. १२। मा. ४) ३४ (फी।२७९)

(१६०।३)॥ ऐणवे वैणवे वा औदले द्वे, वींकम्। वींको गायत्रीन्द्रः प्रजापतिर्वा॥

सुरूपकृत्नूऽ३मूताऽ२३४याइ॥ ओइसुरूपकृत्नूमूऽ१तायाऽ२इ।

ओइसुदुघामिवागोऽ१दुहाऽ२इ। जुहूमसाऽ२इ। द्यविद्याऽ२३४वी। ऐही॥ जुहूऽ२मासीऽ२॥

द्यविद्या। वीवीऽ२३। आऔहोइ। आऔहोऽ६वा॥ एऽ३। द्यविऽ३ईऽ२३४५॥

(दी. ६। प. १३। मा. १०) ३५ (गौ।२८०)

(१६०।४) ॥ औदलम्। ओदलो गायत्रीन्द्रः॥

सुरूपकृ॥ त्नूमूऽ२तयाइ। सुदुघामीऽ३। वागोदूऽ२३४हाइ॥ सुदुघामा॥ वागोऽ२दुहाइ।

जुहूमाऽ२३सीऽ३। द्याऽ२३वीऽ३। द्याऽ३४५वोऽ६हाइ॥

(दी. ४। प. ९। मा. ४) ३६ (धी।२८१)

इति ग्रामे गेय-गाने चतुर्थः प्रपाठकः॥४॥

(१६१।१)॥आर्षभानि सैन्धुक्षितानि वा वाध्राश्वानि वा त्रीणि। त्रयाणामृषभो गायत्रीन्द्रः॥

अभित्वावृषभासुताइ॥ सूतश्सृजा। मिपाइताऽ१याऽ२इ॥ तृम्पावाऽ१याऽ२॥

श्नुहाऽ३१उवायेऽ३॥ माऽ२३४दाम्॥

(दी. ३। प. ६। मा. ५) १ (टु।२८२)

(१६१।२)

अभित्वावृषभासुतेअभ्याहाउ॥ त्वावृऽ३षाभाऽ१सूताऽ२इ। सूतश्सृजा। मिपाइताऽ१याऽ२इ॥

तृम्पाऽ३होइ। वियाऽ३हो॥ श्नुहीमाऽ२३दाऽ३४३म्। ओऽ२३४५इ॥ डा॥

(दी. ७। प. ९। मा. ८) २ (झै।२८३)

(१६१।३)

अभित्वावृषभासुते। सुतश्सृजोवा॥ मिपीतायाऽ२इ। सुतश्सृजामि। षीताऽ२३याइ॥

त्राऽ२३०पाऽ३॥ वाऽ२याऽ२३४औहोवा॥ श्नुहीमदाऽ२३४५म्॥

(दी. ९। प. ८। मा. ४) ३ (दी।२८४)

(१६२।१)॥कौत्से पाश्ववाजे वा दाश्ववाजे वा द्वे, ऐडकौत्सम्। द्वयोः कुत्सो गायत्रीन्द्रः॥

याही०द्राऽ२३। चमसेषुवाईया॥ सोमश्चमूषुतेसुतः। सोमश्चमू। षुताइसूऽ२३ताः॥

पाइबेऽ३ह्याइ। आस्याऽ३हाइ॥ त्वमीशाऽ२३इषाऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ७। प. १०। मा. १०) ४ (जौ।२८५)

(१६२।२) ॥ स्वार कौत्सम्॥

यइन्द्रचामाऽ६सेषुवा॥ सोमश्चमूषुताऽ१इसूऽ३ताः। सोमश्चमूऽ३। षूऽ३ताइसूऽ३ताः॥

आऽ२इ। पिबेदस्योऽ२३४हाइ॥ त्वमाऽ३इशाऽ५इषा६५६इ॥

(दी. ६। प. ७। मा. १०) ५ (खौ।२८६)

(१६३।१)॥सौमेधानि, पूर्वतिथानि पौर्वातिथानि वा त्रीणि। त्रयाणां सुमेधा गायत्रीन्द्रः॥

योगेयोगेतवस्तराम्॥ वाजेवाजेहवामहे॥ सखायाऽ२३ईऽ३॥ द्रमूऽ२३४वा। ताऽयोऽ६हाइ॥

(दी. ११। प. ५। मा. ३) ६ (ङि।२८७)

(१६३।२)

योगेयोगेतवस्ताऽ६राम्॥ वाजेऽ२वाजेऽ२हवाऽ२महेऽ३। होवाऽ३हाइ॥ साखाऽ२याईऽ२३।

होवाऽ३हाइ॥ द्रमूऽ२३। ताऽ२याऽ२३४औहोवा॥ ऊऽ३२३४पा॥

(दी. ११। प. ८। मा. ५) ७ (गु।२८८)

(१६३।३) ॥ सोमेधम्॥

योगेयोगेतवाहाउस्ताराम्॥ वाजेवाजे। हवाऽ२माहाइ। हूवाइ। औऽ३होऽ२३४वा।

साखायइ। द्रमूऽ२तायाइ। हूवाइ। औऽ३होऽ२३४वा॥ सखायआ॥ हूवाऽ२इ।

औऽ३होऽ२३४५वाऽ६५६॥ द्रमूऽ३तयेऽ२३४५॥

(दी. ११। प. १३। मा. ९) ८ (गो।२८९)

(१६४।१) ॥ दैवतिथं मैधातिथं वा। देवातिथिर्गायत्रीन्द्रः॥

आतूऽ३४। एतानि। षीदाऽ६ता॥ इंद्रमभाइ। प्रगायता। साखायस्स्तोम। वा। औऽ३हो।

ववाऽ२हाऽ२३४साः॥ हयाइ। सखायस्स्तोम। वा। औऽ३हो॥ हिम्माऽ२३।

हाऽ३४५सोऽ६हाइ॥

(दी. ९। प. १५। मा. ४) ९ (नी।२९०)

त्रिंशत् पञ्चमः खण्डः॥५॥ दशतिः॥५॥

(१६५।१) ॥ आंगिरसं माधुछन्दसम् वा। मधुछन्दा गायत्रीन्द्रः॥

इदाऽ६मे॥ हियऽ३नूओऽ१जासाऽ२। सूतश्राधा। नाम्पाऽ१ताऽ२इ।

पिबातुवस्यागिर्वाणाऽ२३४ः॥ पिबाऽ३४तुवाऽ३॥ स्याऽ२गाऽ२३४औहोवा॥ वाऽ२३४णाः॥

(दी. ३। प. ८। मा. ५) १० (डु।२९१)

(१६५।२) ॥ गायत्री (आंगिरसं) क्रौञ्चम् वा। क्रौंचो गायत्रीन्द्रः॥

इदश्हियाऽ४औहो॥ नूऽ३ओजाऽ२३४सा। सूतश्राधा। नाऽ३२म्। पाऽ२३४ताइ॥

पिबातुवस्याऽ२३। ग। वाहाइ॥ वाऽ२३४णाः। एहियाऽ६हा। होऽ५इ॥ डा॥

(दी. २। प. १२। मा. ७) ११ (छे।२९२)

(१६५।३)॥आंगिरसं घृतश्चुन्निधनं प्राजापत्यं माधुच्छन्दसं वा। प्रजापतिर्गायत्रीन्द्रः॥

इदश्ह्यनूऽ६ओजसा॥ सुतश्राधा। ना०पातौ। होवाऽ३हाइ। पिबातुव। स्यगाइर्वाणौ।

होवाऽ३हाइ॥ पिबातुवौ। होवाऽ३हा॥ स्यगायेऽ३ः। वाऽ२नाऽ२३४औहोवा॥

घृतश्चुताऽ२३४५ः॥

(दी. ९। प. १२। मा. ७) १२ (थे।२९३)

(१६६।१)    ॥ वाम्राणि प्रैयमेधानि वा त्रीणि। त्रयाणां वाम्रो गायत्रीन्द्रः॥

महा२इन्द्राः॥ पुरश्चनो। माऽ१हीऽ२त्वामाऽ२। स्तुव। ज्रिणाइ॥ द्यौऽ२र्नाप्राऽ२॥

थिनाशाऽ२३वाऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. १। प. ९। मा. ५) १३ (घु।२९४)

(१६६।२)

महाहा२इन्द्राः॥ पूऽ३राश्चाऽ३नो। महाऽ२इत्वाऽ२३४मा। स्तुवौऽ३हौऽ३। हवाऽ५ज्रिणाइ।

द्यौर्नप्र। थिनाशवाऽ२३ः॥ द्यौऽ२र्न्नाऽ२३४प्रा॥ थिनौऽ३हौऽ३। हवोवा। शाऽ५वोऽ६हाइ॥

(दी. ३। प. ११। मा. ६) १४ (टू।२९५)

(१६६।३)

महा२इन्द्राऽ५ःपुरश्चनाः॥ माहित्वाऽ३२३२३मा। स्तुवज्राऽ३२३२३इणाइ॥

द्यौर्न्नाऽ३२३२३प्रा॥ थिनाशवाऽ३२३२३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ३। प. ७। मा. ६) १५ (ठू।२९६)

(१६७।१)    ॥ गौरीविते द्वे। द्वयोर्गौरीवितिर्गायत्रीन्द्रः॥

आतूनआ॥ द्रक्षुमाऽ२३न्ताम्। चाइत्रंग्राभाऽ२३२हाइ। संगृऽ२भाया।

महाहस्तोऽ२३४५हाइ। दक्षाऽ२इणाना॥ महाऽ२३॥ हाऽ२स्ताऽ२३४औहोवा॥

दक्षिणेऽ३नाऽ२३४५॥

(दी. ६। प. ९। मा. ८) १६ (घै।२९७)

(१६७।२)

आतूनइन्द्रक्षुमान्ताम्॥ चित्राऽ२०ग्राऽ२३४भाम्। संगृभाऽ२३४या। माऽ३हाऽ३॥
हाऽ२स्ताऽ२३४औहोवा॥ दक्षिणेनाऽ२३४५॥

(दी. ५। प. ६। मा. ४) १७ (पी।२९८)

(१६७।३) ॥ आपालवैणवे, वेणवे वा आपाले वा आकूपारे पारववे वा द्वे।

द्वयोराकूपारो गायत्रीन्द्रः॥

आतूनइ। द्रक्षुमाऽ६न्ताम्॥ चित्रंग्राभ१संगृभाऽ२या। चित्रंग्राभ१सम्। गृऽ। औऽ३होइ।
भाऽ२३४या॥ ऐहोइ। महाहस्तीदक्षाऽ२३होइ॥ औहो। वाहोऽ२३४वा। णाऽ५इनोऽ६हाइ॥

(दी. ९। प. १२। मा. ८) १८ (थै।२९९)

(१६७।४)

आतूनइन्द्रक्षुमाऽ६न्ताम्॥ चित्रंग्राभ१संगृभाया। चित्रंग्राभ१सम्। गृऽ२३। ईऽ३४हा।
भाऽ२३४या॥ ऐहोइ। महाहस्तीदक्षाऽ२३होइ॥ औहो। वाहोऽ२३४वा। णाऽ५इनोऽ६हाइ॥

(दी. १०। प. ११। मा. ७) १९ (पे।३००)

(१६८।१) ॥ धुरोः सामनी द्वे। द्वयोर्धुरा गायत्रीन्द्रः॥

अभीअभी॥ प्रगोऽ३पातिंगिराऽ२। इन्द्रमर्चयाथाऽ१विदाऽ२इ॥ सूनूऽ३१होइ।
सत्योऽ२३४हा॥ स्याऽ२साऽ२३४औहोवा॥ पतीऽ३मेऽ२३४५॥

(दी. ४। प. ७। मा. ४) २० (थी।३०१)

(१६८।२)

अभीअभी॥ प्रगो। पतिंगिरा। इन्द्राम्। अर्चायाऽ२३४था। हिऽ३०स्थिहिम्ऽ३।

आऽ२३४ऽइविदाइ॥ सूनुꣳसत्यस्यसा। हिऽ३स्थिहिम्ऽ३। ओऽ२३४वा। पाऽ५तोऽ६हाइ॥

(दी. १। प. ११। मा. ९) २१ (को।३०२)

(१६८।३)

अभि। प्रगोऽ३। पतिंगिरा॥ इन्द्रमर्चयथाविदाऽ२३इ। सूनुꣳसत्याऽ३१२३।

स्यसाऽ५त्पताइम्॥ सूनुꣳसत्याऽ३१२३॥ स्यसोवा। पाऽ५तोऽ६हाइ॥

(दी. १। प. ९। मा. ४) २२ (घी।३०३)

(१६९।१) ॥ वाचस्सामनी द्वे। द्वयोर्वाक् गायत्रीन्द्रः॥

कयानश्ची॥ त्रआभूऽ३वात्। ऊताइस। दा। वार्द्धःसाऽ२३४खा॥ कयाश्चाऽ३चीऽ३॥

ष्ठाऽ२३याऽ३। वाऽ३४५र्तोऽ६हाइ॥

(दी. २। प. ८। मा. ४) २३ (जी।३०४)

(१६९।२)

होवाइ। होवाइकयानश्ची॥ त्रआभूऽ३वाऽ३४त्॥ होवाइ। होवाऊतीसदा॥

वृधास्साऽ३खाऽ३४॥ होवाइ। होवाइकयाश्चाइ॥ ष्ठया। वाऽ२र्त्ताऽ२३४औहोवा॥

ऊऽ२३४पा॥

(दी. १९। प. ११। मा. १०) २४ (व्रौ।३०५)

(१६९।३) ॥ महावामदेव्यं वा। वामदेवो गायत्रीन्द्रः॥

काऽ५या। नश्चाऽ३इत्राऽ३आभुवात्॥ ऊ। तीसदावृधस्स। खा। औऽ३होहाइ।

कयाऽ२३श्चाइ॥ ष्ठयौहोऽ३। हिंमाऽ२। वाऽ२र्तोऽ३५हाइ॥

(दी. ६। प. १०। मा. ६) २५ (ङू।३०६)

(१७०।१)॥ इन्द्रस्य सत्रासाहीये, अजितस्य आजिती वा द्वे। द्वयोरिन्द्रो गायत्रीन्द्रः॥

त्यमुवाः॥ सत्रासाहाऽ२म्। विश्वासुगीर्षूआऽ१याताऽ२म्॥ आच्याऽ२३॥

वाऽ२याऽ२३४औहोवा॥ सियूऽ३तयेऽ२३४५॥

(दी. ६। प. ६। मा. ५) २६ (कु।३०७)

(१७०।२)

त्याऽ३४म्। उवस्सत्रासाहम्। ओऽ६वा॥ विश्वासुगीर्ष्वायाऽ२ताम्। आऽ२च्या। वाऽ२३या॥

सियौऽ३हो। वाहाऽ३४३इ॥ ताऽ२३४योऽ६हाइ।

(दी. ७। प. ९। मा. ५) २७ (झु।३०८)

(१७१।१) ॥ वामदेव्यम्। वामदेवो गायत्रीन्द्रः॥

सादा॥ सस्पताइमद्भुता। ओऽ२३४वा। प्रायाओऽ२३४वा॥ आइंद्रा।

स्याकामाऽ२३४५याऽ६५६म्॥ सनिंमेऽ२धामयासिषाऽ२३४५म्॥

(दी. ६। प. ७। मा. ५) २८ (ठु।३०९)

(१७२।१) ॥ अश्विनोः साम। अश्विनौ गायत्रीन्द्रः॥

हाइ। आप्सूदाऽ२३४क्षाः। आप्सूदाऽ२३४क्षाः। येतेपंथाअऽ३धोदिवाऽ२३४५ः॥ हाइ।

आप्सूदाऽ२३४क्षाः। आप्सूदाऽ२३४क्षाः। येभिर्व्यश्वऽ३माइरयाऽ२३४५ः॥ हाइ।

उताश्रोऽ२३४षा॥ तुनोऽ२३। भूऽ२वाऽ२३४औहोवा॥ ईऽ२३४ती॥

(दी. ६। प. १३। मा. १२) २९ (गा।३१०)

(१७३।१) ॥ गौतमस्य भद्रं। गोतमो गायत्रीन्द्रः॥

भद्रंभाद्राम्॥ नआभाऽ२३राऽ३। आइषामूर्जाम्॥ शतक्राऽ२३ताऽ३उ॥ यादिन्द्रामृ॥
डाऽ२याऽ२३४औहोवा॥ सीऽ२३४नाः॥

(दी. ३। प. ७। मा. ७) ३० (ठे।३११)

(१७४।१) ॥ आश्विनोः साम, सोम साम वा। आश्विनौ गायत्रीन्द्रः॥

अस्तिसोमोअयꣳसुतः। अ। स्त्येआस्ती॥ सोमोअयꣳसुतःपिबन्त्यस्यम। रुतोऽ२३४हाइ॥
उतस्वराऽ५जोवा॥ श्वाऽ५इनोऽ६हाइ॥

(दी. ४। प. ७। मा. ७) ३१ (थे।३१२)

॥ द्वाविंशतिः, षष्टः खण्डः॥६॥ दशतिः॥८॥

॥ इत्यैंद्राख्ये द्वितीये गाने बहुसामाख्यम्॥

॥ द्वितीयं तन्त्रं सम्पूर्णम्॥

(१७५।१) ॥ त्वाष्ट्री साम। त्वष्टा गायत्रीन्द्रः॥

ईङ्खयन्तीः॥ अपाऽ२स्यूवाऽ२ः। आइन्द्रंजातम्। ऊपाऽ१साताऽ२इ॥ वन्वानाऽ२३साः॥
सुवीरियाऽ३१उवाऽ२३॥ वृधेऽ१॥

(दी. ३। प. ७। मा. ७) ३२ (ठे।३१३)

(१७६।१) ॥ गोधा साम। गोधा गयत्रीन्द्रो विश्वेदेवा वा॥

नकिदेवाः॥ इनाइ। इनीमासाऽ३इ। मासीऽ३या॥ नकियायो॥ पया। पयामासाऽ३इ।

मासीऽ३या॥ मन्त्रश्रुत्याम्॥ चरा। चरामासाऽ३इ। मासीऽ३या॥

(दी. २। प. १२। मा. ६) ३३ (छू।३१४)

(१७७।१) ॥ सुवितुस्साम। सविता गायत्री सविता॥

दोषोआगात्॥ बृहद्गाया। द्युमद्गाऽ२३मान्। आथर्वणाऽ३॥ स्तुहि। औऽ३होऽ३४इ॥

देवाऽ३म्। सवोवा। ताऽ५रोऽ६हाइ॥

(दी. ६। प. ९। मा. ६) ३४ (घू।३१५)

(१७८।१) ॥ उषसस्साम। उषा गायत्र्यश्विनौ॥

एषोउषाः॥ आपूर्विया। व्युच्छति। होवाऽ३हाइ। प्रियादाऽ२३इवाऽ३४ः॥

स्तुषाऽ३४इवामाऽ३॥ श्विनोऽ२३४वा। वृऽ५होऽ६हाइ॥

(दी. ३। प. ८। मा. ७) ३५ (गे।३१६)

॥ इति ग्रामे गेय-गाने पञ्चमस्यार्धः प्रपाठकः॥

(१७९।१) ॥ त्वष्टुरातिथ्य द्वे। द्वयोस्त्वष्टा गायत्रीन्द्रः॥

इन्द्रोदधीचोअस्थभिरियाऽ२ईऽ३या॥ वृत्राण्यप्रतिष्कुतइयाऽ२ईऽ३या॥

जघाननवतीर्णवइयाऽ२॥ ईऽ२। याऽ२३४। औहोवा॥ ऊऽ२३४पा॥

(दी. ८। प. ७। मा. ५) १ (ठु।३१७)

(१७९।२)

इन्द्रोदधाइ॥ चोअस्थाऽ२३४भीः। वृत्राणिया। प्रातिष्कुताः॥ जघानाऽ२३ना॥ वतीर्नवा।
औऽ३होवा। होऽ५इ॥ डा॥

(दी. ५। प. ९। मा. ५) २ (भु।३१८)

(१८०।१) ॥ पौषम्। पूषा गायत्रीन्द्रः॥

इन्द्रोहिमाहाउ॥ त्सीऽ३आन्धाऽ३साः। वाइश्वेभिस्सोऽ२३हाऽ३। मापर्वाऽ२३४भीः।
महा२३॥ आऽ२भाऽ२३४औहोवा॥ ष्टिरोजसाऽ२३४५॥

(दी. ६। प. ७। मा. ६) ३ (खू।३१९)

(१८१।१) ॥ इन्द्रस्यमायम्, माया वा। इन्द्रो गायत्रीन्द्रो वृत्रहा वा॥

आतूऔहो। आ तूऔहो॥ नइन्द्रवृत्राऽ२३४हान्। अस्माकमर्द्धम्। आगाऽ२३ही। गाहीऽ२॥
माहाऽ२न्माहीऽ२३॥ भिरूऽ२३४वा। ताऽ५इभोऽ६हाइ॥

(दी. १०। प. ९। मा. ७) ४ (भे।३२०)

(१८२।१) ॥ इन्द्रस्य संवर्तस्य सांवर्ते वा द्वे। द्वयोरिन्द्रो गायत्रीन्द्रः॥

हा। हाउवाऽ३। ओजस्तदस्यतित्विषेऽ२३४॥ हा। हाउवा। उभेयत्समवर्तयाऽ२३४त्॥ हा।
हाउवाऽ३। इन्द्रश्चर्मेऽ२वरोदसीऽ२३४५॥

(दी. ४। प. ९। मा. ४) ५ (धी।३२१)

(१८२।२)

ओजस्तदाऽ५स्यतित्विषाइ॥ उभेयत्समवर्तयादाऽ१इन्द्राऽ२३ः॥ चाऽ२र्माऽ२३४औहोवा॥
वरोदसीऽ२३४५॥

(दी. ५। प. ४। मा. ४) ६ (भी।३२२)

(१८३।१) ॥ आंगिरस्सस्य शौनःशेपम्, च्यावनं वा। शुनःशेपो गायत्रीन्द्रः॥

अयाऽ५मु। ताऽ३इसाऽ३मातसाइ॥ कापोतइ। वगार्भाऽ१धीऽ२म्॥ वाचाऽ२स्ताचीऽ२३त्॥

नओऽ२३४वा। हाऽ५सोऽ६हाइ॥

(दी. २। प. ७। मा. ७) ७ (छे।३२३)

(१८४।१) ॥ प्रतीचीनेडं काशीतम्। काशीतो गायत्रीन्द्रो वायुर्वा॥

वातआवातु। भाऽ५इषजाम्॥ शा०भुमयः। भुनोहृदाऽ२३४इ। हाहोइ॥ प्रनआयूंषीऽ३ता॥

रिषात्। औऽ२३होवा॥ ईडा॥

(दी. ५। प. ९। मा. ८) ८ (भे।३२४)

॥ द्वादशप्रथमः, सप्तमः खण्डः॥७॥ दशतिः॥९॥

(१८५।१) ॥ सौमित्रम्। सुमित्रो गायत्रीन्द्रो विश्वेदेवा वा॥

यंरक्षन्तिप्रचेतसा॥ वरुणोमित्रोअर्याऽ२३मा॥ न। काइस्साऽ२३दा॥ हिंमायेऽ३।

भ्याऽ२ताऽ२३४औहोवा॥ जाऽ२३४नाः॥

(दी. ५। प. ७। मा. ५) ९ (फु।३२५)

(१८६।१) ॥ श्यावाश्वे द्वे। द्वयो श्यावाश्वो गायत्रीन्द्रः॥

गव्योषुणोयथापुरा॥ अश्वयोतरथा। यावरिवस्या॥ म। होमाऽ२३॥ होनाऽ३४औहोवा॥

ऊऽ२३४५पा॥

(दी. ८। प. ७। मा. १) १० (द्वा।३२६)

(१८६।२)

गव्योषुणोयथापुराऽ६ए॥ अश्वयोऽ१त। रथाऽ२। या। वरिवाऽ२स्या॥ महो।

महोऽ२नाऽ२३४औहोवा॥ ईऽ२३४५॥

(दी. ६। प. ८। मा. २) ११ (ग्रा।३२७)

(१८७।१) ॥ शैखण्डिनम्। शिखण्डी गायत्रीन्द्रः॥

इमास्तई॥ द्रपृश्नयोघृतंदूऽ३हा। औहोऽ३हाऽ३। हाऽ३इ। ताआऽ२शाऽ२३४इराम्॥

एनाऽ३४मृताऽ३॥ स्यपोऽ२३४वा। प्यूऽ५षोऽ६हाइ॥

(दी. ४। प. ८। मा. ६) १२ (दू।३२८)

(१८८।१) ॥ वैतहव्यम्। वीतहव्यो गायत्रीन्द्रः॥

अयाधियाचगव्याऽ६या॥ पुरुणाऽ३। मन्पूऽ२३४रू। ष्टूतौ। वाऽ३२। यत्सोमेऽ३सोमआ॥

यात्सोमेऽ२सो। मओऽ२३४वा। भूऽ५वोऽ६हाइ॥

(दी. ८। प. ९। मा. ३) १३ (ढि।३२९)

(१८९।१) ॥ भारद्वाजम्। भरद्वाजो गायत्रीन्द्रः सरस्वती वा॥

पावकानईया॥ सरास्वाऽ१तीऽ२। वाजेभिर्वा। जिनाइवाऽ१तीऽ२॥ यज्ञाऽ२३म्॥

वाऽ२ष्टूऽ२३४औहोवा॥ धियावसूऽ२३४५ः॥

(दी. ७। प. ७। मा. ५) १४ (छु।३३०)

(१९०।१) ॥आरुणस्य वैतहव्यस्य वा साम्, सौभरं वा। आरुणोगायत्रीन्द्रः॥

कइमम्। उहुवाहाई॥ नाहुऽ३षाइषूऽ१वाऽ२। आइन्द्रसोम। स्यतार्पाऽ१याऽ२त्।

सानोऽ२वसू। नियाभाऽ१राऽ२त्॥ सनोऽ२वसूनि॥ आऽ२३। भराउवा॥

आगहियेहिताइमेऽ१॥

(दी. ८। प. ११। मा. ९) १५ (टो।३३१)

(१९१।१) ॥ सौभरम्। सुभरिर्गायत्रीन्द्रः॥

आयाहिसू। षुमाहाऽ१इतेऽ२। षुमाहाऽ१इतेऽ२। आइंद्रसोमम्। पिबाइमम्।

पिबाआऽ१इमाऽ२म्॥ एदंबर्हाइः॥ सदोमाऽ२३माऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ४। प. १०। मा. १२) १६ (ना।३३२)

(१९२।१) ॥ पाष्ठौहे द्वे। द्वयोः पष्ठवाड् गायत्रीन्द्रः॥

महाइत्राऽ२३४इणाम्॥ अवाऽ२रस्तू। द्युक्षंमाऽ२३४इत्रा। स्याऽ२र्यम्णाः॥

दुराधाऽ२३४र्षाम्॥ वरौहोऽ२३४। वा॥ णाऽ५स्योऽ६हाइ॥

(दी. १। प. ८। मा. ७) १७ (गे।३३३)

(१९२।२)

महित्रीणामवरस्तूऽ६ए॥ द्युक्षंमित्रस्यार्यम्णाः॥ दुराधाऽ२३र्षाम्॥ वरौहोऽ२। हिंमाऽ२। ण।

स्योऽ२। याऽ२३४औहोवा॥ हाओवा। ओवाऽ२३४५॥

(दी. ७। प. १०। मा. ५) १८ (जु।३३४)

(१९३।१) ॥ धुरासाकमश्वम्। साकमश्वो गायत्रीन्द्रः॥

त्वावतोऽ३। हौऽ३होऽ३१इ॥ पुरूवसोऽ३। हौऽ३होऽ३१इ॥ वयमिन्द्राऽ३। हौऽ३होऽ३१इ।
प्रणेतऽ३ः। हौऽ३होऽ३१इ॥ स्मसिस्थातऽ३ः। हौऽ३होऽ३१इ॥ हरीणाऽ३म्।
हौऽ३होऽ३१२३४५इ॥ डा॥

(दी. ५। प. १३। मा. ९) १९ (बो।३३५)

॥ एकादश द्वितीयः, अष्टमः खण्डः॥८॥ दशतिः॥१०॥

॥ इति द्वितीयः प्रपाठकः॥२॥

(१९४।१) ॥ यामम्। यमो गायत्रीन्द्रः॥

उत्वामन्दन्तुसोहोमाः॥ कृणौहो। ष्वरौहो। धाअद्रिवाः॥ अ। वब्राऽ२३ह्मा॥ द्विषाऽ२ः।
हाऽ२इ। औऽ३होऽ३१येऽ३। जाऽ२हाऽ२३४औहोवा॥ एऽ३। ययूऽ२३४५ः॥

(दी. ७। प. १२। मा. ७) २० (छे।३३६)

(१९५।१) ॥ आंगिरसां हरिश्रीनिधनम्। अंगिरसो गायत्रीन्द्रः॥

गिर्वणःपाहिनःसुतम्। गिर्वणःपा॥ हिनःसुताऽ२म्। मधोर्धाराभिराहोऽ२। ज्यासेऽ२३।
हाउवा॥ इन्द्रात्वाऽ२३दा॥ तमायेऽ३त्। याऽ२शाऽ२३४औहोवा॥ हरीऽ३श्रीऽ२३४५ः॥

(दी. ६। प. १०। मा. ६) २१ (ङू।३३७)

(१९६।२) ॥ वैरूपम्। विरूपो गायत्रीन्द्रः॥

सादा॥ वइन्द्राऽ३ः। चर्कृषादा। उपोनुसाऽ३ः। सापर्यन्॥ नदेवाऽ२३ः॥ वृताऽ३४३ः।
शूऽ३४३। राऽ३आऽ५इन्द्राऽ६५६ः॥

(दी. २। प. ९। मा. ९) २२ (झो।३३८)

(१९७।१) ॥ आसितं सिन्धुषाम वा। असितो गायत्रीन्द्रः॥

आत्वाविशंत्विन्दाऽ६वाः॥ समुद्रमिवसिन्धवः। समुद्रमि। वसिन्धाऽ२३वाः। नत्वामिन्द्रातिरिच्यते॥

नत्वामाऽ२३इन्द्रा॥ तिरिच्याऽ२३ताऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ६। प. ९। मा. ६) २३ (घू।३३९)

(१९८।१) ॥ यमस्य इन्द्रस्य वा अर्कः (अर्कम्)। यमो गायत्रीन्द्रः॥

इन्द्रमिद्गाथिनोबृहात्॥ इन्द्रामर्काइ। भिरर्किणाः॥ इन्द्रंवाणीऽ३ः। हाऽ३हाइ॥

अनूऽ५षता। होऽ५इ॥ डा॥

(दी. २। प. ८। मा. ६) २४ (जू।३४०)

(१९९।१) ॥ सौमित्रे द्वे। द्वयोः सुमित्रो गायत्रीन्द्रः ऋभुर्वा॥

इन्द्रइषेददातुनः। ओहाइ॥ ऋभु। क्षणाऽ२म्। ऋभुꣳराऽ२३४यीम्। वाजीददातुवाऽ३॥

वाजीददा॥ तुवोऽ२३४वा। जाऽ५इनोऽ६हाइ॥

(दी. ६। प. ९। मा. ७) २३ (घे।३४१)

(१९९।२)

इन्द्रइषेददातुनाऽ६ए॥ ऋभुक्षणमृ। भूऽ२१२३म्। रयीऽ३४३म्॥ वाऽ२३जी॥

ददाऽ२ओऽ२३। तुवोवा। जाऽ५इनोऽ६हाइ॥

(दी. २। प. ८। मा. ७) २६ (जे।३४२)

(२००।१) ॥ इन्द्रस्याभयङ्करम्। इन्द्रो गायत्रीन्द्रः॥

इन्द्रोअंगा॥ महद्भाऽ२३याम्। आभीषद। पचुच्याऽ२३वाऽ३४त्॥ सहाऽ३४इस्थिराऽ३ः॥

विचोवा। षाऽ५णोऽ६हाइ॥

(दी. २। प. ७। मा. ६) २७ (छू।३४३)

(२०१।१) ॥ त्वाष्ट्री साम। त्वष्टा गायत्रीन्द्रः॥

इमाउत्वा॥ सुताइसुताइ। नक्षन्ताऽ२३इगीऽ३४ः। वनः। गाऽ३इराः॥ गावोवाऽ३त्साऽ३म्॥

नधोऽ२३४वा। नाऽ५वोऽ६हाइ॥

(दी. २। प. ८। मा. १०) २८ (जौ।३४४)

(२०२।१) ॥ पौषम्। पूषा गायत्रीन्द्रः इन्द्रापूषणौ वा॥

इन्द्रानुपू॥ षणावाऽ२३याम्। साख्याय। सुवस्ताऽ२३याइ॥ हूवेऽ२मावाऽ२३॥

जसोऽ२३४वा। ताऽ५योऽ६हाइ॥

(दी. ३। प. ७। मा. ३) २९ (ठि।३४५)

(२०३।१) ॥ इन्द्राण्याः साम। इन्द्राणी गायत्रीन्द्रः॥

न। क्येनाकी॥ आइन्द्रत्वदुत्तराम्। नज्यायोऽ२। अस्ताऽ२३इवृ। हिम्ऽ३स्थिहिम्।

त्राऽ२३४हान्॥ नक्ये। वंयाऽ२३था॥ हिम्ऽ३स्थिहिम्ऽ३४३। तूऽ३४५वोऽ६हाइ॥

(दी. ३। प. ११। मा. ९) ३० (टो।३४६)

एकादशस्तृतीयः, नवमः खण्डः॥९॥ दशतिः॥१॥

(२०४।१) ॥ श्यावाश्वं तारणं वा। स्यावाश्वो गायत्रीन्द्रः॥

तरणिंवाः। जनाऽ२३नाम्। त्रदंवाजाऽ३हाऽ३। स्यागोमाऽ२३४ताः॥ समानाऽ२३मू॥
प्रशाऽ५ऽसिषाम्। होऽ५इ॥ डा॥

(दी. २। प. ८। मा. ५) ३१ (जु।३४७)

(२०५।१) ॥ वैरूपं। विरूपो गायत्रीन्द्रः॥

असृग्रमाइन्द्राऽ६तेगिराः॥ प्रातीऽ२त्वामूऽ२त्। अहा। सता॥ साऽ१जोऽ२षावाऽ२॥
षभाऽ२०पतिम्। ओऽ२३४५इ॥ डा॥

(दी. ३। प. ८। मा. ५) ३२ (डु।३४८)

(२०६।१) ॥ सौमित्रम् कौत्सं वा। सुमित्रो गायत्रीन्द्रः॥

सुनीथोघाऽ५समर्तियाः॥ यंमरुतोऽ२यमर्यमा॥ मित्रास्पांत्यद्रुहः॥ ऊऽ। ऊऽऽ।
वाहाऽ३१उवाऽ२॥ अतिद्विषाऽ२३४५ः॥

(दी. ७। प. ७। मा. ४) ३३ (छी।३४९)

(२०७।१) ॥ तौभम्। तुभो गायत्रीन्द्रः॥

औहोवाऔहोऽ२३४वा। ओऽ६हा। यद्वीडावीऽ३०द्राऽ३यत्स्थिराइ॥ औहोवाऔहोऽ२३४वा।
ओऽ६हा। यत्पर्शानेऽ३पाऽ३राभृतम्॥ औहोवाऔहोऽ२३४वा। ओऽ६हा।
वसुस्पार्हाऽ३०ताऽ३दाभर॥ औहोवाऔहोऽ२३४वा। ओऽ६हा। होऽ५इ॥ डा॥

(दी. २२। प. १३। मा. ७) ३४ (जे।३५०)

(२०८।१) ॥ श्रौतम्। श्रुतो गायत्रीन्द्रः॥

श्रुताम्॥ वोवृत्रहन्तमम्। प्रशर्द्धंचर्षणा ऽ२३इनाम्॥ आशाइषा ऽ२३इरा॥ धसेमहा।
औ ऽ३होवा। हो ऽ५इ॥ डा॥

(दी. ३। प. ८। मा. ७) ३५ (डे।३५१)

इति ग्रामे गेय-गाने पञ्चमः प्रपाठकः॥५॥

(२०९।१) ॥ आभीशवम्। अभिशुर्गायत्रीन्द्रः॥

अरंतइन्द्रश्रवसेए। ए॥ गमाइमशूरत्वावताऽ३ः। होवाऽ३हाइ॥ अरा२श्वाऽ१क्राऽ२३।
होवाऽ३हाइ॥ पराइमाऽ२३णाऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ३। प. ९। मा. ९) १ (ढो।३५२)

(२१०।१) ॥ पौषम्। पूषा गायत्रीन्द्रः॥

धानावतंकरंभिणाम्॥ अपूपवन्तमूऽ१क्थीऽ३नाम्॥ इन्द्राप्राऽ२३४ताः। ओऽ२३४हाइ॥
जुषोवा। स्वाऽ५नोऽ६हाइ॥

(दी. ३। प. ६। मा. ५) २ (टु।३५३)

(२११।१) ॥ इन्द्रस्य क्षुरपवि। इन्द्रो गायत्रीन्द्रः॥

अपाफेनेननमुचेः॥ शिरइ। द्रोत्। अवाऽ२र्त्ताऽ२३४याः॥ वाइश्वोऽ२३ः॥
याऽ२दाऽ२३४औहोवा॥ जयस्पृधाऽ२३४५ः॥

(दी. ५। प. ७। मा. ८) ३ (फे।३५४)

(२१२।१) ॥ सौमित्रे द्वे। सुमित्रो गायत्रीन्द्रः॥

इमेतआ॥ द्रसोमाः। होवाऽ३होइ। सुतासोयेऽ३। चासोतूऽ२३४वाः॥ तेऽ४षाम्।
हाऽ३हाइ॥ मात्स्वप्रभूऽ२३४वा। वाऽ५सोऽ६हाइ॥

(दी. ५। प. ९। मा. ७) ४ (भे।३५५)

(२१३।१)

तुभ्यꣳहाउ॥ सुतासस्सोमाः। स्तीर्णंबाऽ२३र्हीः। विभाऽ२होऽ१इ। वाऽ२३साउ॥

स्तोताऽ३उवाऽ३॥ भ्यआऽ२इ। द्रमृऽ३४औहोवा॥ डाऽ२३४या॥

(दी. ६। प. ९। मा. ९) ५ (घो।३५६)

दश चतुर्थः, दशमः खण्डः॥१०॥ दशतिः॥२॥

(२१४।१) ॥ कौत्से द्वे। कुत्सो गायत्रीन्द्रः॥

आवइन्द्राम्॥ कृविंयथा। वाजयाऽ२३०ताः। शताक्रतुम्॥ मꣳहिष्ठाऽ२३ꣳसी॥

चायाऽ३उवाऽ३इ॥ दूऽ२३४भीः॥

(दी. २। प. ७। मा. ७) ६ (छे।३५७)

(२१५।१)

अतश्चिदिंद्रिनउपाऽ६ए॥ आयाहिश। तवाजाऽ२३याऽ३४॥ इषाऽ३४सहाऽ३॥

स्रवोऽ२३४वा। जाऽ५योऽ६हाइ॥

(दी. २। प. ६। मा. ३) ७ (चि।३४८)

(२१६।१) ॥ औषसम्। उषा गायत्रीन्द्रः॥

आबुन्दंवृ॥ त्रहाद। दाइ। जातःपृच्छाऽ३त्। विमाऽ२ताऽ२३४राम्॥ कउग्राऽ२३ःके॥

हाशृण्विरे। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ३। प. १०। मा. ५) ८ (णु।३५९)

(२१७।१) ॥ भारद्वाजम्। भरद्वाजो गायत्रीन्द्रः॥

बृबदुक्थ२हाऽ६वामहाइ॥ सार्प्राऽ२कारा२ऽ२। स्नमू। तयाइ॥ साऽ१धाऽ२ःकार्ण्वाऽ२३।
तमोऽ२३४वा। वाऽ५सोऽ६हाइ॥

(दी. २। प. ७। मा. ३) ९ (छि।३६०)

(२१८।१) ॥ कौत्सं। कुत्सो गायत्रीन्द्रः॥

ऋजुनीतीनोवरुणः। इहा॥ मित्रोनयतिविद्वाऽ२३न्त्साः। इहा॥ अर्यमादाऽ२३इवाइ। इहा॥
सजोषाऽ३उवाऽ३॥ ईऽ३४हा॥

(दी. ५। प. ८। मा. ५) १० (बु।३६१)

(२१९।१) ॥ औषसम्। उषा गायत्रीन्द्रः अश्विनौ वा॥

दूरादीऽ२३हेवयत्सताः॥ अरुणप्सुराशिश्वाऽ२३इतात्॥ विभानूऽ२३०वी॥ श्वाथातनत्।
इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ५। प. ७। मा. ५) ११ (फु।३६२)

(२२०।१) ॥ मित्रावरुणयोः संयोजनम्। मित्रावरुणौ गायत्रीन्द्रः मित्रावरुणौ॥

आनोमित्रा। वरुणाऽ३। औहोवाऽ२३४॥ घृतैर्गव्यूतिमु। क्षताऽ३म्। औहोवाऽ२॥
माध्वारजाऽ२२सिषूऽ३। औहोवाऽ२॥ क्रतू। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ११। प. १२। मा. २) १२ (खा।३६३)

(२२१।१) ॥ ऋतुषाम। ऋतवो गायत्रीन्द्रो मरुतो वा॥

उदुत्येसूनाऽ६वोगिराः। काष्ठाय। ज्ञाइ। षुवाऽ२त्नाऽ२३४ता॥ वाश्राऽ२३भीऽ३॥
ज्ञूऽ२३याऽ३। ताऽ३४५वोऽ६हाइ॥

(दी. ६। प. ७। मा. ४) १३ (खी।३६४)

(२२२।१) ॥ विष्णोः साम। विष्णुर्गायत्री विष्णुः॥

इदाऽ६मे॥ विष्णूऽ२ः। विचक्राऽ२३४माइ। त्राइधानि। दधाइपाऽ१दाऽ२म्॥ समूऽ२होऽ१।
ढाऽ२३माऽ३॥ स्याऽ२पाऽ२३४औहोवा॥ एऽ३। सुलेऽ१॥

(दी. ३। प. १०। मा. ५) १४ (णु।३६५)

नव पञ्चमः, एकादशः खण्डः॥११॥ दशतिः॥३॥

(२२३।१) ॥ कौत्सम्। कुत्सो गायत्रीन्द्रः॥

अतीहिमा॥ न्युषाऽ२वाइणाऽ२म्। सुषुवा२साऽ२म्। होइ। ऊपैऽ१रायाऽ२॥
अस्यराताऽ२३उ॥ सूऽ२ताऽ२३४औहोवा॥ पीऽ२३४बा॥

(दी. ४। प. ८। मा. ६) १५ (दू।३६६)

(२२४।१) ॥ काश्यपम्, आप्सरसं वा। कश्यपो गायत्रीन्द्रः॥

कदुप्रचेतस। महाऽ३इ॥ वाऽ२३४चो। देवाहाउ। वचोदेवा। यशस्याऽ२३ताऽ३४इ॥
तदाऽ३४इद्धियाऽ३॥ स्यवोऽ२३४वा। धाऽ५नोऽ६हाइ॥

(दी. ५। प. ९। मा. ५) १६ (भु।३६७)

(२२५।१) बार्हदुक्थे द्वे। द्वयोर्बृहदुक्थो गायत्रीन्द्रः॥

उक्थंचनोहाइ॥ शस्यमानम्। नागाराऽ२३यीः। आचिकेता॥ नगायाऽ२३त्राम्। गी।
यमाऽ२नाऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. ९। प. ८। मा. ५) १७ (ह्वु।३६८)

(२२६।१)

इन्द्रोक्थाइ॥ भिर्मान्दाष्ठोऽ३। वाजानाऽ२३४०चा। वाजपतिः॥ हराऽ२इवाऽ२३४न्त्सू॥

तानाऽ२९स। खा। औऽ३होवा। होऽ५इ॥ डा॥

(दी. ३। प. १०। मा. ६) १८ (णु।३६९)

(२२७।१) ॥ कौत्सम्। कुत्सो गायत्रीन्द्रः॥

आयाही॥ उपनस्सुतम्। होवाऽ३हाइ। वाजेऽ२भिर्माहृणीयथाऽ३ः। होवाऽ३हाइ॥

महा९इवयुवाऽ२३। होवाऽ३हाऽ३इ॥ जाऽ२नाऽ२३४औहोवा॥ ऊऽ३२३४पा॥

(दी. ९। प. ९। मा. ७) १९ (घ्रे।३७०)

(२२८।१) ॥ कौत्से द्वे। द्वयोः कुत्सो गायत्रीन्द्रः॥

ओऽ२होऽ१इ। कदावसो। स्तोत्राऽ३म्। हर्यताआ॥ ओऽ२होऽ१इ। अवश्मशा।

रुधादूऽ२३४वाः॥ ओऽ२होऽ१इ। दीर्घ९सुतम्॥ वाताऽ३४३। पीऽ३याऽ५याऽ६५६॥

ईऽ२३४५॥

(दी. ५। प. १२। मा. ७) २० (फ्रे।३७१)

(२२८।२)

कदाऽ३४औहोवा। वसो। स्तोत्राऽ३म्। हर्यताआ॥ अवाऽ३४। औहोवा। श्मशाऽ२।

रुधादूऽ२३४वाः॥ दीर्घाऽ३४औहोवा। सुताऽ२३म्॥ वाताऽ३४३। पीऽ३याऽ५याऽ६५६॥

(दी. ८। प. १२। मा. ६) २१ (ठू।३७२)

(२२९।१) ॥ और्ध्व (अर्ध) सद्मनम्। ऊर्ध्वसद्मा गायत्रीन्द्रः॥

ब्राह्मणादी। द्रराधसाः। पिबासोमाऽ२म्। ऋतूऽ२नू॥ तवेदाऽ२ऽसाऽ२३॥ ख्याऽ२३माऽ३।

स्ताऽ३४५र्तोऽ६हाइ॥

(दी. ६। प. ७। मा. ३) २२ (खि।३७३)

(२३०।१) ॥ और्ध्व (अर्ध) सद्मनम्। ऊर्ध्वसद्मा गायत्रीन्द्रः॥

वयंघातेअपिस्मसाइ॥ स्तोतारइन्द्रगिर्वणाः। ववाऽ२३होइ॥ तूवन्नोजीऽ२। ववाऽ२३हो॥

न्वसोऽ२३। माऽ२पाऽ२३४औहोवा॥ एऽ३। उपाऽ२३४५॥

(दी. ६। प. ९। मा. ६) २३ (घू।३७४)

(२३१।१) ॥ अभीपादस्य औदलस्य साम। उदलो गायत्रीन्द्रः॥

एन्द्रपृक्षुकासुचीऽ६दे॥ नृमणाम्। तनूषुऽ३धाइहाऽ१इनाऽ२ः॥ सात्राजिदु॥ ग्रपौऽ२३ऽसियाउ।

वाऽ३। ऊऽ३४पा॥

(दी. ४। प. ७। मा. ५) २४ (थ्यु।३७५)

(२३२।१) ॥ आमहीयवं उक्थ्यामहीयवम् वा। अमहीयुर्गायत्रीन्द्रः॥

एवाहोऽ३असिवीरयूः॥ एवाशूऽ१राऽ२ः। उताऽ२३स्थिराः॥ आइवातेरा॥ धियाऽ२३०मनाउ।

वाऽ३॥ स्तौषेऽ२३४५॥

(दी. ७। प. ७। मा. ६) २५ (छू।३७६)

॥ एकादश षष्ठः, द्वादशः खण्डः॥१२॥ दशतिः॥४॥

इति द्वितीयोऽध्यायः॥२॥

॥ इत्यैन्द्राख्ये तृतीये गाने एकसाम्याख्यं तृतीयं तन्त्रं संपूर्णम्॥

(२३३।१) ॥ भरद्वाजस्यार्कौ द्वौ। द्वयोभरद्वाजा बृहतीन्द्र ईशानेन्द्रौ वा॥

अभित्वाशू॥ रनोनुमाऽ२ः। ओइनूऽ३माः। आदुग्धाइ। वधाइनवाऽ२ः। ओइनाऽ३वाः।
आइशानमस्यजगतः। सुवार्दृशम्। आर्दृऽ३शाम्॥ आइशानमि॥ द्रतास्थुषः। आऽ२३।
स्थुऽ२। षाऽ२३४। औहोवा॥ स्थुषःस्थुषाऽ२३४५ः॥

(दी. ६। प. १६। मा. १५) २६ (कु।३७७)

(२३३।२)

अभित्वाऽ३शूरनोनुमा॥ आदुग्धाइव। धाइनाऽ२३वाः। आइशानमस्याजग। ताः।
सुवाऽ२र्दृऽ२३४शाम्॥ ईशानाऽ२३मी॥ द्रातस्थुषः। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥
डा॥

(दी. ६। प. ११। मा. ९) २७ (को।३७८)

(२३४।१) ॥ इन्द्रस्य भारद्वाजे द्वे। द्वयोर्भरद्वाजो बृहतीन्द्रः॥

त्वामिद्धी॥ हवाऽ२महे। आ। ओऽ३होवाहाउवाऽ३। ऊऽ३४पा। सातौवाज।
स्यऽ३काऽ२रवः। आ। औऽ३होवाहाउवाऽ३। ऊऽ३४पा॥ त्वांवृत्राइषुड। द्रसाऽ२त्पतिम्।
आ। औऽ३होवाहाउवाऽ३। ऊऽ३४पा॥ नरस्त्वांकाष्ठा। सुआऽ२र्वतः। आ।
औऽ३होवाहाउवाऽ३॥ ऊऽ३२३४पा॥

(दी. १७। प. २०। मा. १०) २८ (श्लौ।३७९)

(२३४।२)

त्वामिद्धिहवामह। सातौवाजोवा॥ स्याकाऽ१रावाऽ२ः। त्वांवृत्राइषुइन्द्रसत्। पातिन्नाराऽ२ः॥

त्वांकाऽ२३ष्ठा। सुअर्वाऽ२३ताऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ८। प. ९। मा. ८) २९ (ढै।३८०)

(२३५।१) ॥ सान्नते द्वे। द्वयोः सन्नतिर्बृहतीन्द्रः॥

अभिप्रवाः॥ सुराधाऽ२३साम्। इन्द्रमर्चयाथाऽ१विदाऽ२३४इ। योजाऽ३४रितॄ।

भ्योमघवापूरूऽ१वासूऽ२ः॥ सहाऽ२३॥ स्राऽ२इणाऽ२३४औहोवा॥ वशिक्षतीऽ२३४५॥

(दी. ६। प. ८। मा. ६) ३० (गू।३८१)

(२३५।२)

अभाइप्रवाऽ२ः। सुराधाऽ२३४साम्॥ इन्द्रामर्चाऽ२३। याऽ२थाऽ२३४औहोवा। वीऽ२३४दे।

योजरितृभ्योमघवाऽ२पुरूवसुः॥ सहा॥ स्रेणेवऽ३शायेऽ३। क्षाऽ२ताऽ२३४औहोवा॥

सुमूऽ३तयेऽ२३४५॥

(दी. १०। प. १०। मा. ६) ३१ (मू।३८२)

(२३५।३) ॥ श्यैतम्। प्रजापतिर्बृहतीन्द्रः॥

अभिप्रवस्सुरा। धसाऽ३४औहोवा॥ आइन्द्रमर्च। यथाविदाऽ२३४इ। ओऽ६हा।

योजरितृभ्यः। माघाऽ२३वा। पुरूऽ२। वाऽ२३४सूः॥ सहस्रेणावाइवाऽ३शा॥ हिम्मायेऽ३।

क्षाऽ२ताऽ२३४औहोवा॥ वाऽ२३४सू॥

(दी. ७। प. १३। मा. ७) ३२ (जे।३८३)

(२३६।१) ॥ प्राजापतेर्नाविकम्। प्रजापतिर्बृहतीन्द्रः॥

तंवः। एदास्माम्॥ ऋतीषहम्। हाऽ२इ। आऔऽ३हो। इहा। वासोर्मन्दानमन्धसाऽ३ः।

हाऽ२इ। आऔऽ३हो। इहा। अभिवत्सन्नस्वसरेषुधेनवाऽ२ः। हाऽ२इ। आऔऽ३हो। इहा॥

इन्द्रम्। हाऽ२इ। आऔऽ३हो। इहा॥ गीर्भाइः। नाऽ२३४औहोवा॥ वामहेऽ२३४५॥

(दी. १०। प. २१। मा. १७) ३३ (पे।३८४)

(२३६।२) ॥ अभीवर्तस्य इन्द्रस्य वा, अभीवर्तम्। अभीवर्तो बृहतीन्द्रः॥

तंवोऽ३दाऽ३स्मामृतीषहोवा॥ वासोर्मन्दा। नमान्धाऽ१साऽ२ः। आभिवत्साऽ३१२३४म्।

नस्वसरे। षुधाइनाऽ१वाऽ२ः॥ इन्द्रा२गाऽ१इर्भीऽ२ः॥ नवाऽ३। माऽ२३४५॥ हाऽ२३४५इ॥

(दी. ४। प. १०। मा. ७) ३४ (ने।३८५)

(२३६।३) ॥ अभीर्वतस्य भागम्। भगो बृहतीन्द्रः॥

तंवोदस्ममृती। षहाओऽ२३४वा॥ वासोर्मन्दानमन्धासाऽ२ः।

आभिवत्सन्नस्वसरेषूधेऽ१नावाऽ२ः। ओऽ३वा॥ इन्द्रंगाऽ२३४इर्भीः॥

नवामाऽ२३४५हाऽ६५६इ॥ भगाऽ३याऽ२३४५॥

(दी. ६। प. ८। मा. ६) ३५ (गू।३८६)

(२३६।४) ॥ आभीवर्त आभीवर्तम् वा। इन्द्रो बृहतीन्द्रः॥

तंवोदस्ममृती। षहाऽ३म्। वाऽ२३४। सोर्मन्दानम्। धासाः॥ अभिवत्सन्नस्वसरेषूऽ३धाइ।

नाऽ२३वाः॥ इन्द्रंगीर्भाइर्नाऽ३वा॥ हिंऽम्३स्थिहिंऽम्३। हिंऽम्३स्थिहिम्। नवानवोऽ२३४वा।

माऽ५होऽ६हाइ॥

(दी. ६। प. १२। मा. १०) ३६ (ग्वौ।३८७)

(२३६।५)                    ॥ नौधसम्। नोधा बृहतीन्द्रः॥

ताऽ२३४म्। वोदस्ममृती। षाहाम्॥ वसोर्मन्दा। नाऽ३मान्धाऽ३साः। आऽ२३भी। वात्सन्न।

स्वस। राइ। षूधेनाऽ२३४वाः॥ आऽ२३इन्द्राम्॥ गाइभिर्नवोऽ२३४वा॥ माऽ२३४हे॥

(दी. ३। प. १३। मा. ८) ३७ (डै।३८८)

॥ इति ग्रामे गेय-गाने षष्टस्यार्द्धः प्रपाठकः॥

(२३७।१)                    ॥ लौशे द्वे। द्वयोर्लुशो बृहतीन्द्रः॥

तारो॥ भाइर्वोविदाऽ३१उवाऽ२३। वाऽ२३४सूम्। इन्द्राऽ२ॱसबाधतयेऽ२। बृहात्।

बृहाऽ३१उ। वाऽ२। गायन्तस्सुतसोमेध्वरे॥ हुवेभाऽ२३राम्॥ नाकारिणम्।

इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ११। प. १३। मा. १०) १ (गौ।३८९)

(२३७।२)

तारो॥ भाइर्वोविदाऽ३१उवाऽ२३। वाऽ२३४सूम्। इन्द्राऽ२ॱसबाधऊतयेऽ२।

बृहाद्वाऽ१याऽ२। तास्सुतसोऽ२। मेअध्वराइ॥ हुवेभाऽ२३राम्॥ नाकारिणम्।

इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ८। प. १२। मा. ९) २ (ठो।३९०)

(२३७।३)                    ॥ धानाके द्वे। द्वयोर्धानाको बृहतीन्द्रः॥

तरोभिर्वोविदद्वासूम्॥ इन्द्राम्। इन्द्र२सबाधऽ३ऊताऽ१याऽ२इ॥ बृहात्।

बृहद्वायन्तस्सुतसोमऽ३आध्वाऽ१राऽ२इ॥ हुवाइ। हुवेभरन्नकारिणम्। इडाऽ२३भाऽ३४३।

ओऽ२३४५इ॥ डा॥

(दी. ७। प. १०। मा. १०) ३ (ञौ।३९१)

(२३७।४) ॥ क्षुल्लककालेयं वा॥

तरोभिर्वोविदाऽ४द्वासूम्॥ इन्द्र२सबाऽ३। धऊऽ२ताऽ२३४याइ। बृहात्। बृहाऽ३१उ। वाऽ२।

गायन्तस्सुतसोमेध्वरे॥ हुवेहोइभाऽ२३राम्॥ नाकारिणम्। इडाऽ२३भाऽ३४३।

ओऽ२३४५इ॥ डा॥

(दी. ८। प. १२। मा. १०) ४ (ठौ।३९२)

(२३७।५) ॥ कालेयानि त्रीणि। त्रयाणां कालेयो बृहतीन्द्रः॥

तरोऽ२३भिर्वो। विदाऽ५द्वसूम्॥ इन्द्र२सबाऽ३धाऊऽ१तायाऽ३इ। ओऽ३४वा। ओऽ२३४वा।

बृहगायन्तस्सुतसोऽ३माअध्वाराऽ३इ। ओऽ३४वा। ओऽ२३४वा॥ हुवाइभराम्॥

नाकाराऽ२३४इणाम्। ओऽ२३४वा। ओऽ२३४५इ॥ डा॥

(दी. ३। प. १३। मा. १०) ५ (डौ।३९३)

(२३७।६)

तरोभिर्वोऽ२। विदद्वाऽ२३४सूम्॥ इन्द्र२सबाऽ३धाऊऽ१तायाऽ२इ। औऽ३होऽ३वा। २।

बृहद्गायतस्सुतसोऽ३माअध्वाऽ२इ। औऽ३होऽ३वा। औऽ३होऽ३वा॥ हुवाइभाऽ१राऽ२म्।

औऽ३होऽ३वा। औऽ३होऽ३वा॥ नाकारिणम्। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ५। प. १५। मा. ९) ६ (मो।३९४)

(२३७।१)

तरोभाऽ३इर्वोविदद्वसूम्॥ इन्द्रा२सबा। धऊतयाऽ२३इ। बृहद्गायाऽ३। ताऽ२३४ः।

सुतसोमेअ। ध्वाऽ३राइ। हुवाइभरौ। वाऽ३४३ओऽ३४वा॥ नकाऽ५रिणाम्। होऽ५इ॥ डा॥

(दी. ६। प. १२। मा. ११) ७ (खा।३९५)

(२३८।१) ॥ ऐषिरे द्वे। द्वयोरिषिरो बृहतीन्द्रः॥

तरणिरीत्॥ सिषाऽ३साती। वाजा०पुराम्। धियायुजा। आवाऽ३आइंद्राम्॥ पुरूहूतम्।

नमेगाइरा॥ नाइमीऽ३०ताष्टे॥ वासुद्रवाऽ२३४५म्॥

(दी. ५। प. ९। मा. ९) ८ (भो।३९६)

(२३८।२)

तराहाउ॥ णिरित्सिऽ३षासति। हयाइ। हयाइ। वाजंपुरम्। धियायूजौ। होवाऽ३हाइ।

आवइन्द्रंपुरुहूतम्। नमाइगाइरौ। होवाऽ३हाइ॥ नेमिंतष्टेवऽ३सा॥

औऽ३होवाहाऽ३४औहोवा॥ उप्। द्रूऽ२३४वाम्॥

(दी. १२। प. १४। मा. १३) ९ (झि।३९७)

(२३८।३) ॥ गौश्रृंगे द्वे। द्वयोर्गौश्रृंगो बृहतीन्द्रः॥

तरणिरित्सिषा। साऽ३ती। वाजंपुरंध्यायुजा॥ वाजंपुरंध्यायुजा। वआऽ२३इन्द्राऽ३४म्।

पुरुहूतंनमे। गाऽ३इरा॥ नेमाइन्ताऽ२३ष्टे॥ वसुद्रुवम्। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥

डा॥

(दी. ९। प. १२। मा. ७) १० (थे।३९८)

(२३८।४)

तरणिरित्सिषा। सतीऽ३। वाऽ२३४। जंपुरंधिया। युजा॥

वाजंपुरंध्यायुजावइन्द्रंपुरुहूतन्नमाऽ२इगाइराऽ२। हाऽ२ऊऊवाइ॥

नोमिंतष्टेवसोवाऽ३ओऽ२३४वा॥ द्रुऽ५वोऽ६हाइ॥

(दी. ८। प. ९। मा. ८) ११ (ढै।३९९)

(२३९।१) ॥ पृष्ठं। पृष्ठोबृहतीन्द्रः॥

पिबाऽ३सुतस्यरसिनाः॥ मत्स्वानइन्द्रगोमताऽ२३होइया।

आपिर्नोबोधिसधमाद्येवृधाऽ२३होइया॥ अस्माऽआऽ२३वा॥ तुताइधाऽ२३याऽ३४३ः।

ओऽ२३४५इ॥ डा॥

(दी. ८। प. ७। मा. ८) १२ (ठै।४००)

(२३९।२) ॥ शौक्लम्। शुक्लो बृहतीन्द्रः। अभीवर्तौ द्वौ। द्वयोर्जमदग्निः॥

पिबासुतस्यरसिनोहाउ॥ मत्स्वानइन्द्रगोमाऽ२तः। हाओऽ२३४वा॥

आपिर्नोबोधिसधमादियेवाऽ२र्द्धे। हाओऽ२३४वा॥ अस्माऽअवन्तुतेधाऽ२यः। हाओऽ२३४वा॥

ईऽ२३४५॥

(दी. १२। प. ८। मा. ८) १३ (ज्रै।४०१)

(२३९।३) ॥ जमदग्नेरभीवर्तः। जमदग्निर्बृहतीन्द्रः॥

पिबासुतस्यरसिनोमत्स्वाहाउ। नाऽ२ः। इन्द्राऽ२गोमताऽ२३ः। हाउ। आपिर्नोऽ२बो।

धिसाधमाऽ२। दियेवृधाऽ२३। हाउ॥ अस्मा२अवाऽ२३। हा॥ तुतेऽ३होऽ२।

याऽ२३४औहोवा॥ धियऊऽ२३४५॥

(दी. १०। प. १३। मा. ८) १४ (बै।४०२)

(२४०।१) ॥ कौल्मलबर्हिषे द्वे। द्वयोः कुल्मलबर्हिर्बृहतीन्द्रः॥

तुवाऽ३२होऽ३एहिचेरवाइ॥ विदाभगंवसूऽ२त्तायाऽ२३४इ। उद्वावृषस्वमघावान्॥ ऐहोइ।

गाऽ२विष्टयाइ॥ उदिन्द्राश्वमोवाऽ३ओऽ२३४वा। ष्टाऽ५योऽ६हाइ॥

(दी. ६। प. ७। मा. ८) १५ (खै।४०३)

(२४०।२)

त्व२ह्येहिचेराऽ६वाइ॥ विदाभगंवसूत्ताऽ१याऽ२३४इ। उद्वावृषस्व। माऽ५घवान्॥ आइहियाइ।

गविष्टायाऽ२इ॥ उदिन्द्राऽ२अश्वमी। ओऽ३१म्। ओऽ२३४वा। ष्टाऽ५योऽ६हाइ॥

(दी. ४। प. १०। मा. ९) १६ (नो।४०४)

(२४१।१) ॥ वसिष्ठस्यजनित्रे द्वे। द्वयोर्वसिष्ठो बृहतीन्द्रः॥

नहिवाऽ३श्चारमंचना॥ हुवेहोऽ२इ। वसिष्ठःपराइम२साताऽ२इ। अस्माकमद्यमरुताऽ२ः।

सुताइसाऽ२३४चा॥ वाइश्वेऽ३होइ। पिबाऽ३हो॥ तुकाऽ२३। माऽ२इनाऽ२३४औहोवा॥

जनित्राऽ२३४५म्॥

(दी. ३। प. १०। मा. १०) १७ (णौ।४०५)

(२४१।२)

नहिवश्वरमम्। चनाऽ३। वसिष्ठाः। होइ। होइ। पराइम२साताऽ२३४इ। अस्माकमद्यमरुतः।

सुताऽ३इसाचा॥ वाइश्वेपिबन्तुकौऽ३। होऽ३१येऽ३॥ माऽ२इनाऽ२३४औहोवा॥

जनिऽ३त्राऽ२३४५म्॥

(दी. ४। प. १२। मा. १२) १८ (था।४०६)

(२४२।१) ॥ मैधातिथं दैवतिथं वा। मेधातिथिर्बृहतीन्द्रः॥

माचिदन्यहोहाइ॥ विशोऽ३२साता। सखायाऽ२होऽ१इ। माऔऽ३हो। राइषाउवा।

ण्याताउवा॥ इन्द्रमित्स्तोतावृषणाओऽ३हो॥ साचाउवा। सूताउवा॥ मुहुरुक्थाऔऽ३हो। चशा।

औहो। वाहोऽ२३४वा। साऽ५तोऽ६हाइ॥

(दी. ६। प. १४। मा. ११) १९ (घा।४०७)

एकत्रिंशत्प्रथमः खण्डः॥१॥ दशतिः॥५॥

(॥ इति तृतीयस्य प्रथमोऽर्धः॥)

(२४३।१) ॥ वैखानसम्। वैखानसा बृहतीन्द्रः॥

नकिष्टाऽ३०कर्मणानशात्॥ यश्चाकारा। सदावृधाऽ२३म्। सदावृधाम्। इद्रान्नया। ज्ञैर्विश्वगू।

तमाऽ२र्भ्वसाऽ२३म्। तमृभ्वसाम्॥ अधार्ष्टधा। ष्णुमोजसाऽ२३॥ ष्णुमोजसाऽ३४३।

ओऽ२३४५इ॥ डा॥

(दी. ८। प. १३। मा. ६) २० (डू।४०८)

(२४३।२) ॥ पौरुहन्मनं प्राकर्षं वा। पुरुहन्मा बृहतीन्द्रः॥

नकिष्टंकर्मणानशत्। होऽ३४इ। यश्चकाऽ३रासदावृधाम्॥ आइन्द्राऽ२न्नायाऽ२।

ज्ञैर्विश्वगूर्तामृभ्वासाऽ२म्॥ अधाऽ२हो१। ष्टाऽ२३०धृऽ३४॥ हाओवा॥ ष्णुमोजसाऽ२३४५॥

(दी. ६। प. ९। मा. ६) २१ (घू।४०९)

(२४४।१) ॥ सात्यम्। सत्यो बृहतीन्द्रः॥

यऋताऽ३इचीदभिश्रिषाः॥ पूराऽ२जात्रूऽ२। भ्यआतृदाऽ३ः। होवाऽ३हाइ।

सा०धाऽ२तासाऽ२म्। धाइंमघवाऽ२पुरूवसुः। होवाऽ३हाइ॥ नाइष्काऽ२र्तावीऽ२॥ ह्लुतंपुनः।

हो। वाऽ२। हाऽ२३४। औहोवा॥ ऊऽ२३४पा॥

(दी. ५। प. १४। मा. १२) २२ (भ्वा।४१०)

(२४५।१) ॥ भारद्वाजानिचत्वारि, भारद्वाजम्। चतुर्णांभरद्वाजो बृहतीन्द्रः॥

आत्वासहा॥ स्रमाशाऽ१ताऽ२म्। यूक्तारथेहिरण्यय। ब्रह्मायूऽ१जाऽ२ः। हारयइ।

द्रकाइशाऽ१इनाऽ२ः॥ वहा०तूऽ१सोऽ२३॥ माऽ२पाऽ२३४औहोवा॥ ताऽ२३४ये॥

(दी. ७। प. ९। मा. ७) २३ (झे।४११)

(२४५।२) ॥ भारद्वाजं, कण्वबृहद्वा। कण्वोबृहतीन्द्रः॥

औहोआत्वासहाऽ६ए॥ स्रमाशाऽ१ताऽ२३४म्। हाहोइ। यूक्तारथेहिरण्यये।

ब्रह्मायूऽ१जाऽ२३४ः। हाहोइ। हारयइ। द्रकाइशाऽ१इनाऽ२३४ः। हाहोइ॥

वहा०तूऽ१सोऽ२३४। हाहो॥ मपीऽ३। ताऽ२३४याइ। उहुवाऽ६हाउ॥ वा॥

(दी. ११। प. १५। मा. १३) १४ (ङि।४१२)

(२४५।३)　　　॥ भारद्वाजे द्वे। द्वयोर्भारद्वाजो बृहतीन्द्रः॥

आत्वासहस्रमाशतमा॥ युक्तारथेहिरण्यये। ब्रह्मयुजोहरयइन्द्रकेहोऽ२इ। शाइनाऽ२३ः।

हाउवा॥ वहन्तुसोमपीहोऽ३। हिंमाऽ२॥ तयाऽ३इ। ओऽ२३४वा॥ ऊऽ२३४५॥

(दी. ६। प. १०। मा. ६) २५ (ईू।४१३)

(२४५।४)

आत्वासहस्रमा। शताम्। आत्वासहा॥ स्रमाशतम्। आऽ२इहियाऽ२३४हाइ।

यूक्तारथेहिरण्यये। ब्रह्मायूऽ१जाऽ२३ः। आऽ२इहियाऽ२३४हाइ। हारयइ।

द्रकाइशाऽ१इनाऽ२३ः। आऽ२इहियाऽ२३४हाइ॥ वहा०तूऽ१सोऽ२३।

आऽ२इहियाऽ२३४हाइ॥ मपीताऽ२३याऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ९। प. १६। मा. १५) २६ (ते।४१४)

(२४६।१)　　　॥ अग्नेर्वाम्राणि त्रीणि। त्रयाणां वम्रो बृहतीन्द्रः॥

आमन्द्रैरा॥ द्रहरिभाइर्याहिमयूरऽ३रामाभाऽ३इः। मात्वाकाइचीत्। नियेमूऽ२३४रीत्।

नपाशिनाः। अतिधान्वेऽ२॥ वताऽ१ऽ२३। आऽ२इहाऽ२३४औहोवा॥ वाऽ२३४याः॥

(दी. ७। प. ९। मा. १०) २७ (झौ।४१५)

(२४६।२)

आमन्द्रैरिन्द्र। हाऽ५रिभाइः॥ याहिमयूररोमभा-इः। मात्वाकाऽ२३इचीत्। नाइयेमुरित्।

नपाशाऽ२३इनाः॥ अताइधाऽ२३न्वे॥ वताऽ१ऽ२३। आऽ२इहाऽ२३४औहोवा॥

वयोऽ३भीऽ२३४५ः॥

(दी. १०। प. १०। मा. १४) २८ (मी।४१६)

(२४६।३)

आमन्द्रैरिन्द्र। हाऽ५रिभीः॥ याहिमयूररोमभाउ। वाऽ२। माबाऽ२। केचिन्नियेमुरिन्नपाशिनाउ।

वाऽ२॥ आतीऽ२॥ धन्वेवताऽ३१उवाऽ२३॥ ईऽ२३४ही॥

(दी. ८। प. १०। मा. ४) २९ (णी।४१७)

(२४७।१) ॥ गुङ्गोः साम, गौङ्गवम् वा। अग्निर्बृहतीन्द्रः॥

त्वमाऽ३०गाप्रश्न२सिषा॥ दाइवाऽ२ः। शविष्ठमाऽ३। तायाम्। नत्वदन्योमघवाऽ२३नाऽ२॥

स्तिमाऽ३र्डाइता॥ आइन्द्रब्र। वा। औऽ३हो॥ मितोऽ२३४वा। वाऽ५चोऽ६हाइ॥

(दी. १। प. ११। मा. ७) ३० (के।४१८)

(२४८।१) ॥ इन्द्रस्य यशश्चत्वारि सामानि। इन्द्रो बृहतीन्द्रः॥

त्वमिन्द्रा॥ यशाः। असाइ। ऋजीषीशवसः। पताइः। त्ववृत्राणीऽ३ह२सिया। प्रतीनाएऽ२।

कइत्पूरूऽ२॥ अनूऽ२होऽ१॥ तश्च। षाऽ२णाऽ२३४औहोवा॥ धाऽ२३४र्तीः॥

(दी. ७। प. १२। मा. ९) ३१ (छो।४१९)

(२४८।२) ॥ साध्रम्। साध्रा बृहतीन्द्रः॥

त्वमाऽ३इन्द्रायशाअसाइ॥ ऋजाइषीशाऽ२। वसाऽ३४५ः। पाऽ२३४तीः।

त्ववृत्राणिह२स्यप्रतीन्येकइत्पु। रू॥ आनाओऽ२३४वा। ताश्चाओऽ२३४वा॥ षणाऽ५इधृतीः।

होऽ५इ॥ डा॥

(दी. ५। प. ११। मा. १२) ३२ (पा।४२०)

(२४८।३)  ॥ (समीचीनं) साध्रम् वा। सध्रो बृहतीन्द्रः॥

हाउत्वमिन्द्रा॥ याशाआऽ२३४सीऽ६। हाउ। ऋजाइषीऽ२३४शा। वासस्पाऽ२३४तीऽ६ः। हाउ। त्ववृत्रा। णीह२सिया। हाउ। प्रतीनाऽ२३४ए। कइत्पूऽ२३४रूऽ६। हाउ॥ अनुत्ताऽ२३४श्चाऽ६। हाउ॥ षाऽ२णाऽ२३४औहोवा॥ धाऽ२३४र्तीः॥

(दी. ४। प. १६। मा. १३) ३३ (ति।४२१)

(४२८।४)  ॥ (प्राचीनं) यशसी द्वे। द्वयोरिन्द्रो बृहतीन्द्रः॥

हाउत्वमिन्द्रा॥ यशाअसि। होइ। होइ। होयेऽ३४। हाऽउहाऽउहाऽउ। ऋजीषीशवसस्पतिः। होइ। होइ। होयेऽ३४। हाऽउहाऽउहाऽउ॥ त्ववृत्राणिह२स्यप्रतीन्येकइत्पुरू। होइ। होइ। होयेऽ३४। हाऽउहाऽउहाऽउ॥ अनुत्तश्चर्षणीधृतिः। होइ। होइ। होयेऽ३४। हाऽ३उहाऽउहाऽउवा॥ सुवर्महाऽ२३४५ः॥

(दी. ८। प. २२। मा. २६) ३४ (ठू।४२२)

(२४८।५)

होत्वमिन्द्रा॥ यशाअसि। होयेऽ३। होऽ२३४५। ऋजीषीशवसस्पतिः। होऽयेऽ३। होऽ२३४५॥ त्ववृत्राणिह२स्यप्रतीन्येकइत्पुरू॥ होयेऽ३। होऽ२३४५॥ अनुत्तश्चर्षणीधृतिः। होयेऽ३। होऽ२३४वाऽ६। हाउवा॥ सुवर्मयाऽ२३४५ः॥

(दी. ८। प. १५। मा. ६) ३५ (णू।४२३)

॥ इति ग्रामे गेय-गाने षष्ठः प्रपाठकः॥६॥

(२४९।१)  ॥ यौक्तस्रुचम्। युक्तस्रुक् बृहतीन्द्रः॥

इन्द्रमिद्देवता॥ तयाइ। इन्द्रंप्रयातियत्ध्वाऽ२३राइ। आइन्द्राऽ२म्।

समीकेवनिनोहवामाऽ२३हाइ॥ आइन्द्राऽ२म्॥ धानस्यसोऽ२३४वा॥ ताऽ२३४ये॥

(दी. ५। प. ८। मा. ७) १ (बे।४२४)

(२५०।१)  ॥ आत्राणि त्रीणि, वासिष्ठानि वा। त्रयाणां अत्रिर्बृहतीन्द्रः॥

इमाउत्वापुरूवसोगिरः॥ एऽ५। गिराः॥ वार्द्धन्तुयाममाऽ२३। पावकवर्णाः। शुचयोवीऽ३पा।

हिम्०ऽ३स्थिहिम्। चाऽ२३४इता॥ अभिस्तोमैरनोऽ२॥ हुवाइ। होऽ३वा। षता।

औऽ३होवा। होऽ५इ॥ डा॥

(दी. ८। प. १५। मा. १०) २ (णौ।४२५)

(२५०।२)

इमाउत्वापुरूवसोहाउ॥ गिरोवर्द्ध। तूयाऽ१ममाऽ२। इहाहाहोइ। इहोऽ२३४वा।

पावकवर्णाःशुचयः। इहाहाहोइ। इहोऽ२३४वा॥ विपश्चि। तो। अभिस्तोमैः। इहाहाहोइ।

इहोऽ२३४वा॥ अनूऽ२३। षाऽ२ताऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. १७। प. १६। मा. ८) ३ (चै।४२६)

(२५०।३)

इमाउत्वापुरू। वसाऽ३उ। गाऽ२३४इ। रोवर्द्धतुयाः। ममा॥ पावकवर्णाःशुचयोविपश्चि। ता।

औऽ३हो। आऔऽ३हो॥ अभिस्तोमैरनोऽ२॥ हुवाइ। होऽ३वा। षता। औऽ३होवा।

होऽ५इ॥ डा॥

(दी. १०। प. १६। मा. ७) ४ (पे।४२७)

(२५१।१)  ॥ वासिष्ठानि त्रीणि, आत्रीणि वा। त्रयाणां वसिष्ठो बृहतीन्द्रः॥

उदुत्येमा॥ धूमत्तमाऽ२३ः। गाइरस्तोऽ२३४मा। साईरतायेऽ३। सात्राजाऽ२३४इताः।

धानासाऽ२३४आ। क्षीतोतयाऽ२३ः॥ वाजायाऽ२३४०ताः॥ रथाऽ३आऽ५इवाऽ६५६॥

(दी. ६। प. ९। मा. १०) ५ (घो।४२८)

(२५१।२)

उदुत्येमाऽ५धुमत्तमा॥ गिरस्तोमासआऽ२इराताऽ२इ। सत्राजितोधनाऽ२साअ॥

क्षितोतायाऽ२ः॥ वाजयन्तोरथाऽ३१उवाऽ२३॥ ईऽ२३४वा॥

(दी. ९। प. ६। मा. ७) ६ (ते।४२९)

(१५१।३)

हऽ२३४५। उदुत्येमधुम। तमोऽ२३४हाइ॥ गाइराऽ२स्तोमाऽ२। सआऽ३४५इ।

राऽ२३४ते। सत्राजितोऽ२धनसाअक्षितोतयाऽ२३४५ः। हऽ२३४५॥ वाजयन्तोरथाः।

इवोऽ२३४हाइ॥ वाजयन्तोरथाइ। वा। औऽ३होवा। होऽ५इ॥ डा॥

(दी. ११। प. १५। मा. १०) ७ (ङौ।४३०)

(२५२।१)॥ गौतमस्य मनाज्ये, गौराङ्गिरसस्य सामनी वा द्वे। द्वयोर्गोतमो बृहतीन्द्रः॥

यथागौऽ२३रोअपाकृताम्॥ तृष्यन्नेतियवेराऽ२३इणाम्। आपिब्रेनःप्रपिब्रेतूयमागाऽ२३ही॥

कण्वेऽ२षुसूऽ२३॥ साऽ२चाऽ२३४औहोवा॥ पीऽ२३४वा॥

(दी. १२। प. ६। मा. ५) ८ (चु।४३१)

(२५२।२)

ओवाओऽ२३४वा। याथा॥ गौरोअऽ३पाकृतम्। ओऽ३४। हाहोइ। तृष्यन्नेतियऽ३वाइरिणम्।

ओऽ३४। हाहोइ। आऽ२३४पी। त्वेनःप्रपित्वेतूयामाऽ१गहि। ओऽ३४। हाहोइ॥

कण्वेऽ२षुसूऽ२३॥ साऽ२चाऽ२३४औहोवा॥ पिबाऽ३ईऽ२३४५॥

(दी. ११। प. १५। मा. १०) ९ (ङौ।४३२)

पञ्चविंशः, द्वितीयः खण्डः॥२॥ दशतिः॥६॥

(२५३।१)॥इन्द्रस्य हारयणनि, हारायणानि वा, त्रीणि। त्रयाणामिन्द्रो बृहतीन्द्रः॥

शग्ध्यूषू॥ शचाइपताइ। ईऽ२३४०द्रा। विश्वाभिऽ३रूतिभाइः। भाऽ२३४गाम्॥

नहित्वायशऽ३सा०वसू। वीऽ२३४दाम्॥ अनूऽ२३। शूऽ२राऽ२३४औहोवा॥

चराऽ२मसीऽ२३४५॥

(दी. ६। प. १०। मा. ७) १० (ङे।४३३)

(२५३।२)

शग्ध्यूष्वौहोऽ५इशचीपताइ॥ आइन्द्रविश्वाभिरूतिभिः। भगान्नाऽ३ही। त्वायशसाम्।

वसूऽ३हाइ॥ वाइदाऽ२म्॥ अनुशूरचरोवाऽ३ओऽ२३४वा। माऽ५सोऽ६हाइ॥

(दी. ७। प. ८। मा. १०) ११ (जौ।४३४)

(२५३।३)

शग्ध्यूषुशची। पताइ। शग्ध्यूषू॥ शचाइपते। आऽ२इहिमाऽ२३४हाः। आइन्द्रविश्वा।

भिरूतिभिः। आऽ२इहिमाऽ२३४हाः। भागन्नहित्वायशसम्। वसूविदम्।

आऽ२इहिमाऽ२३४हाः॥ अनूशूऽ१राऽ२३। आऽ२इहिमाऽ२३४हाः॥

चरामाऽ२३साऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ७। प. १६। मा. १६) १२ (चू।४३५)

(२५४।१) ॥ वाम्राणि त्रीणि। त्रयाणां वाम्रो बृहतीन्द्रः॥

याहोइ। ईऽ२३४०द्रा॥ भुजऽ३आभाऽ१राऽ२ः। सुवाऽ२३हा। र्वाऽअसुऽ३राइभाऽ१याऽ२ः।

स्तोताऽ३हा। रमिन्मघवन्नस्यावर्द्धायाऽ२॥ याइचाऽ३हाइ॥ त्वेवृक्तबर्हाऽ२३इषाऽ३४३ः।

ओऽ२३४५इ॥ डा॥

(दी. ३। प. ११। मा. ११) १३ (ट।४३६)

(२५४।२)

याइन्द्रभुजआभाऽ६राः॥ सुवर्वाऽअ। सुरेऽ२भाऽ२३४याः। हा। औहोऽ२३४हा।

स्तोतारमाइत्। माघवन्ना। स्यवाऽ२र्द्धाऽ२३४या। हा। औहोऽ२३४हा॥ येचत्वाऽ२३इवृऽ३।

हा। औहोऽ२३४हा॥ क्तबर्हाऽ२३इषाऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ९। प. १६। मा. ११) १४ (त।४३७)

(२५४।३)

याइन्द्रभुजआभरः। उहुवाहाइ॥ सुवर्वाऽअसुरेभ्यः। उहुवाऽ२३हाइ। स्तोतारमिन्मघवन्न।

स्यावर्द्धायाऽ२। उहुवाऽ२३हाइ॥ येचत्वाऽ२३इवृ। उहुवाऽ२३हा॥ क्तबर्हाऽ२३इषाऽ३४३ः।

ओऽ२३४५इ॥ डा॥

(दी. ७। प. १२। मा. १२) १५ (छा।४३८)

(२५५।१)  ॥ वरुणसामानि त्रीणि। त्रयाणां वरुणो बृहतीविश्वेदेवाः॥

प्रमित्रायप्राहाउ॥ आऽ२र्यम्णाइ। सचाऽ२हो। थियोऽ२। हुवाइ। आर्तावसाउ। वराऽ२हो।

थियोऽ२। हुवाइ। वरुणेच्छा। दीयंवचाः॥ स्तोत्राऽ२ꣳहोइ॥ राजोऽ२। हुवा।

षूगायताऽ३१उवाऽ२३॥ ऊऽ३४पा॥

(दी. १०। प. १६। मा. ८) १६ (प्यै।४३९)

(२५५।२)

प्रमित्रायप्रौहोवा॥ आर्यम्णा। औहोऽ३४इ। औहोऽ३वा। साचथ्यम्। ऋतावासा।

औहोऽ३४इ। औहोऽ३वा। वारूथ्येवरुणेछ। दिया०वाचा। औहोऽ३४इ। औहोऽ३वा॥

स्तोत्रꣳराजा। औहोऽ३४इ। औहोऽ३वा॥ षूगायता। औहोऽ३४इ। औहोऽ३वाऽ३४३।

ओऽ२३४५इ॥ डा॥

(दी. १६। प. २०। मा. ७) १७ (डे।४४०)

(२५५।३)

प्रमित्रायप्रार्यम्णेवा। ओवा॥ साचथ्यम्। ऋतावाऽ१साऽ२उ। वाऽ२३रू। थाऽ२३याइ।

वरुणेछ। दायाऽ२३ꣳहाइ। वचोऽ३आ॥ स्तोत्रꣳराजसुगायत। स्तोऽ२३त्राम्॥ राजसुगोऽ३।

होऽ३१२३४। वा। याऽ५तोऽ६हाइ॥

(दी. ६। प. १५। मा. ७) १८ (डे।४४१)

(२५६।१)  ॥ प्रजापतेः वषट्कारणिधनम्। प्रजापतिर्बृहतीन्द्रः॥

अभित्वापूर्वपीतये। अभित्वाऽ३पूर्वपीतयाइ॥ इन्द्रस्तोमोभिऽ३रायवाऽ२ः। भिरायाऽ१वाऽ२३ः।

ओमोऽ३वा॥ समीचीनासऋभवःसऽ३मास्वराऽ२न्। समास्वाऽ१राऽ२३न्। ओमोऽ३वा॥

रुद्रागृणन्तऽ३पूर्वियाऽ२म्। तपूर्वाऽ१याऽ२३म्। ओम्। ओऽ२। वाऽ२३४। औहोवा॥

ऊऽ२३४पा॥

(दी. १७। प. १५। मा. ९) १९ (श्वो।४४२)

(२४७।१) ॥ धृषतो मारुतस्य साम, मारुतम् वा। मारुतोबृहतीन्द्रः॥

प्रवइन्द्रायबृहते। प्रवाः॥ इन्द्रायऽ३बृहाऽ१तेऽ२३। ओमोऽ३वा।

मरुतोब्रह्मऽ३आर्चाऽ१ताऽ२३। ओमोऽ३वा। वृत्रꣳहाना। तिवृ। त्राहाऽ२३। ओमोऽ३वा।

शताक्रतुः॥ वाऽ२३४ज्रे॥ णशाऽ३। हाऽ३हा। तपाऽ५र्वणा। होऽ५इ॥ डा॥

(दी. ७। प. १७। मा. ५) २० (छु।४४३)

(२५८।१)॥ संश्रवसः, विश्वश्रवसः, सत्यश्रवसः, श्रवसो वा, सँज्ञानानि चत्वारि सामानि।

चतुर्णामिन्द्रो बृहती मरुतः॥

सा०त्वाहिन्व। तिधाइताइभीऽ३ः। ताऽ२इ। भाऽ२३४। औहोवा॥ सꣳश्रवसेऽ३॥ दा १

सांत्वारिण। तिधाइताइभीऽ३ः। ताऽ२इ। भाऽ२३४। औहोवा॥ विश्रवसेऽ३॥ दा २

सांत्वातत। क्षुर्द्धाइताइभीऽ३ः। ताऽ२इ। भाऽ२३४। औहोवा॥ सत्यश्रवसेऽ३॥ दा ३

(दी. ९। प. १८। मा. १२) २१ (दा।४४४)

(२४८।२)॥ इन्द्रस्य वाप्यानां वा, संज्ञानानि, वासिष्ठानि वाम्राणि वा त्रीणि॥

सा०श्वाशिश्व। तिधाइताऽ१इभीऽ२ः। ताइभीऽ२ः। बृहदिन्द्रायऽ३गायाऽ१ताऽ२। याताऽ२॥

मरुतोवृत्रऽ३हा०ताऽ१माऽ२म्। तामाऽ२म्॥ येनज्योतिरजनयन्नृऽ३तावाऽ१र्द्धाऽ२ः।

वार्द्धाऽ२ः॥ देवंदेवायऽ३जागृऽ१वीऽ२। गृवीऽ२। सा०श्वाशिश्व। तिधाइताइभीऽ३ः। ताऽ२इ।

भाऽ२३४। औहोवा॥ श्रवसेऽ२३४५॥

(दी. ११। प. १७। मा. १३) २२ (खि।४४५)

(२५९।१) ॥ वाम्रे द्वे। द्वयोर्वाम्रो बृहतीन्द्रः॥

इन्द्राऔऽ३हो॥ क्रतुन्नऽ३आभाऽ१राऽ२। पिताऔऽ३हो। पुत्रेभिऽ३योयाऽ१थाऽ२।

शिक्षाऔऽ३हो। णोअस्मिन्पुरुहूतयामाऽ१नीऽ२॥ जीवाऽ२३ः॥ ज्योऽ२ताऽ२३४औहोवा॥

अशीमहीऽ२३४५॥

(दी. ७। प. ९। मा. ७) २३ (झो।४४६)

(२५९।२) ॥ क्रतु वासिष्ठम्॥

इन्द्रक्रतूऽ५न्नआभरा॥ पितापुत्रेभियोयथा। शिक्षाणोऽ२३आ। स्माइन्पुरुहू। तयामाऽ१नीऽ२।

ओऽ२। हौऽ२। हुवाइ। औऽ३होऽ२३४वा॥ जीवाज्योऽ२३तीः॥ अशीमाऽ२३हाऽ३४३इ।

ओऽ२३४५इ॥ डा॥

(दी. ८। प. १३। मा. ७) २४ (डे।४४७)

(२५९।३) ॥ वासिष्ठम्। वासिष्ठो बृहतीन्द्रः॥

३ ४ ३ ४ ५ र ३ २^ ३ ५ र २ ४र ५ ४र ५ ३ १ १ १ ४ ३र ४ ३र ४ ५
इन्द्रक्रतुन्नआ। भराओऽ२३४वा॥ पितापूऽ३त्रेभियोयथा। ह९ऽ२३४५। पितापुत्रेभियः।
१ ५ ४ ५ ४ ५ ३ ४५र ५ १ ५ ४ ५ ४ ५
याथाऽ२३४हाइ। शाइक्षाणोआ। स्माइन्पुरुहूतया। मानोऽ२३४हाइ॥ जीवाज्योतीः॥
२ १ ५ ४ ॥ ५
अशोऽ२३४वा। माऽ५होऽ६हाइ॥

(दी. ८। प. १२। मा. १०) २५ (ठौ।४४८)

(२६०।१)॥ आङ्गिगस्य अङ्गिगस्य वा, स्वपसः सामनी द्वे। आङ्गिगस्यस्वपसिः बृहतीन्द्रः॥

५र १ २ २ १ र २ २ २ १ र र २ २
मानइन्द्रा॥ परावाऽ३र्णाक्। भवानःसधमाऽ१दीऽ३याइ॥ त्वन्नऊतीत्वमिन्नआपीऽ३याम्॥
१र र २ २ ^ ५
मानइन्द्रपरावृणाऽ३१उवाऽ२३॥ ऊऽ३४षा॥

(दी. ६। प. ६। मा. ८) २६ (क्यै।४४९)

(२६०।२)

३र ४ ५ ४ ५र ३ २ ^ ३र ४ ५ २ १र २ १ विर १र २
मानइन्द्रपरा। वृणाक्। मानइन्द्रा॥ परावाऽ२३र्णाक्। भवाऽ२नःस। धमादाऽ२३याइ।
१ २ — १ १र ३र १ २ १र २
त्वन्नऊतीऽ२। त्वमिन्नाऽ२आपियाम्॥ मानाआऽ२३इन्द्रा॥ परावाऽ२३र्णाऽ३४३क्।
१
ओऽ२३४५इ॥ डा॥

(दी. १०। प. १२। मा. १२) २७ (फा।४५०)

(२६१।१) ॥ आष्कारणिधनं काण्वम्। कण्वो बृहतीन्द्रः॥

५ २ ४र ५र ४ ५ १ र २ १ २ २ १ २ १ २ ३ २ १
वयंघाऽ३त्वासुतावन्ताः॥ आपोनवृ। क्तबाऽ२३र्हिषाउ। वाऽ३२। पवित्रस्या। प्रस्रवणाइ।
२ १ ५ १ २ १र र २ १ ३ १ १ १
षुवृत्राऽ२३४हान्॥ पाऽ२३री॥ स्तोतारः। आसाऽ२३४५ताऽ६५६इ॥ आऽ२३४५षू॥

(दी. ६। प. ११। मा. ७) २८ (के।४५१)

(२६१।२) ॥ महावैष्टंभम्। वैष्टंभो बृहतीन्द्रः॥

औहोवा। वयंघत्वासुतावन्तः। औहोवा॥ औहोइ। आपोनवृक्तबर्हिषः। पवाइत्राऽ३स्या।

प्रस्रवणेषुवाऽ१र्त्राऽ३हान्। औहोऽ३इ। औहोइ॥ परिस्तोतारआसते। पराइस्तोऽ३ता॥

रआसता। औऽ३होवा। होऽ५इ॥ डा॥

(दी. १७। प. १५। मा. ११) २९ (ञा।४५२)

(२६१।३) ॥ अभिनिधनं काण्वम्। कण्वो बृहतीन्द्रः॥

औहोहोहाइ। आइही। वायाम्॥ घाऽ२३४त्वा। सूतावाऽ२३४०ताः। आपोनाऽ२३४वृ।

क्ताबर्हिषाः। ऐहोइ। आऽ२३४इही। पावित्राऽ२३४स्या। प्रास्रावाऽ२३४णे। षूवृत्रहान्।

ऐहोइ। आऽ२३४इही॥ पारिस्तोऽ२३४ता॥ रआऽ३सा५ताऽ६५६इ। आऽ२३४भी॥

(दी. ५। प. १७। मा. १२) ३० (फा।४५३)

(२६१।४) ॥ महावैष्टंभम्। वैष्टंभो बृहतीन्द्रः॥

वयंघत्वोहाइ। सुतावन्तोवा॥ आपोनवृ। क्तबार्होऽ१इषाऽ२३ः। होवाऽ३हाइ।

पवित्रस्यप्रस्रवणे। षुवार्त्राऽ१हाऽ२३न्। होवाऽ३हाइ॥ पराइस्तोऽ१ताऽ२३। होवाऽ३हा।

रआऽ२३॥ साऽ२ताऽ२३४औहोवा॥ दीऽ२३४शाः॥

(दी. ५। प. १३। मा. १०) ३१ (बौ।४५४)

(२६२।१) ॥ श्नौष्टीगवम्। श्नुष्टीगुर्बृहतीन्द्रः॥

ओहाइ। यदिन्द्रना॥ हुषीषूऽ६वा॥ ओजोऽ२नार्म्णाऽ२म्। चकृष्टि। षूऽ।

ऐऽ२हीऽ१आइहीऽ२। हाऽ२ऊऽऊऽवाइ। याऽ१द्वाऽ२पा०चाऽ२। क्षितीनाम्।

ऐऽ२हीऽ१आइहीऽ२। हाऽ२ऊऽऊऽवाइ॥ द्युम्नमाभ। रा। ऐऽ२हीऽ१आइहीऽ२।

हाऽ२ऊऽऊऽवाइ॥ साऽ१त्राऽ२वाइश्वाऽ२। निपौ॑सि। या। ऐऽ२हीऽ१आइहीऽ२।

हाऽ२ऊऽऊऽवाऽ२। याऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. ९। प. २३। मा. २४) ३२ (द्रौ।४५५)

त्रयोविंशतिस्तृतीयः खण्डः॥३॥ दशतिः॥७॥

(२६३।१) ॥ इन्द्रस्य वृषकम्। इन्द्रो बृहतीन्द्रः॥

सत्यमित्थावृ। षाऽ५इदसाइ॥ वृषजूतिर्नोविताऽ२। वृषाह्युग्राश्रृण्विषाऽ२इ। परावताइ॥

वृषोऽ२३र्वा॥ वताइश्रूऽ२३ताऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ५। प. ९। मा. ७) ३३ (भे।४५६)

॥ इति ग्रामे गेय-गाने सप्तमस्यार्द्धः प्रपाठकः॥

(२६४।१) ॥ द्यौते द्वे, द्वैगते वा। द्विगद्बृहतीन्द्रः॥

यच्छक्राऽ३सीपरावती॥ यादर्वाव। तिवार्त्राऽ१हाऽ२न्। अताऽ३ः। हौऽ३होऽ३वा।

त्वागीभिर्द्युगदिन्द्राकेऽ१शिभीऽ२ः॥ सुताऽ२३॥ वाऽ२॰आऽ२३४औहोवा॥ एऽ३।

विवाऽ२सतीऽ२३४५॥

(दी. ७। प. १०। मा. ५) १ (त्रु।४५७)

(२६४।२)

यच्छक्रासिपरावतियदोहाइ॥ वावऽ३ताइवृत्राहाऽ२३४न्। अताऽ३४स्त्वागाइ। भाइर्द्युगदि।

द्राकेऽ१शिभीऽ२ः॥ सुताऽ२३॥ वाऽ२॰आऽ२३४औहोवा॥ विवाऽ२सतीऽ२३४५॥

(दी. ७। प. ८। मा. ८) २ (जे।४५८)

(२६५।१) ॥ कार्तयशं कार्तवेशं वा। कृतयशा बृहतीन्द्रः॥

अभिवोवीरमन्धसाः॥ मदेषुऽ३गायाऽ२। गिरामाहाऽ३। वीचेताऽ२३४साम्॥ इन्द्रन्नामा॥

श्रूत्यꣳशाकाऽ२इ। नाऽ२३४औहोवा॥ वचोउपाऽ२३४५॥

(दी. ८। प. ८। मा. ५) ३ (डु।४५९)

(२६६।१) ॥ इन्द्रस्य शरणम्। इन्द्रो बृहतीन्द्रः॥

इन्द्रत्रिधाऽ५तुशरणाम्॥ त्रिवरूथꣳसुवस्तयाइ। छर्दिर्याऽ२३छा। माघवद्भ्यः। चामह्याऽ२३०चा॥

यावयाऽ२३दी॥ वूमेऽ२भिया। औऽ३होवा। होऽ५इ॥ डा॥

(दी. २। प. १०। मा. ४) ४ (जी।४६०)

(२६७।१) ॥ श्रायन्तीयम्। श्रायन्तीयो बृहतीन्द्रः (प्रजापतिः) सूर्यः॥

श्रायन्तइवसूऽ४रायाम्॥ विश्वाऽ२इदिन्द्राऽ२। स्यभाऽ२क्षाता। वासूनिजातोजनिमा।

नियोजाऽ१साऽ२॥ प्रतिभागन्नदीऽ२धिमः। प्राऽ२३ती॥ भागान्नाऽ३दा। हिम्। धिमाऽ३ः।

ओऽ२३४वा॥ हेऽ२३४५॥

(दी. ८। प. १२। मा. ६) ५ (ठू।४६१)

(२६८।१) ॥ वाम्रम् आक्षीलं वा। वाम्रो बृहतीन्द्रः॥

नसीमदेवआ। हाऽ३हाऽ३इ। पाऽ२३४। तत्पतोवा॥ इषꣳहोऽ२इ। दीर्घाहोऽ२।

योमर्तायाऽ२ः। आइतग्वाचित्। यआइताशो। युवाउवाऽ३। ऊऽ३४पा। जताऽ२इ॥

आइन्द्रोऽ२हारीऽ२॥ युयोऽ२३। जाऽ२ताऽ२३४औहोवा॥ ऊऽ३२३४पा॥

(दी. ७। प. १६। मा. १२) ६ (ह्ला।४६२)

(२६९।१)॥ श्याक्राणि, वा वैयश्वानि वा, आश्वानि वा, श्यौल्कानि वा, सुम्नानि वा, द्युम्नानि वा, पृष्ठानि वा, यौक्ताश्वानि वा, सोम सामानि वा, वासिष्ठानि वा, इमानि त्रीणि। त्रयाणां वसिष्ठो बृहतीन्द्रः॥

आनः। एविश्वा॥ सुहाव्याऽ२म्। आइन्द्रः२सम्। त्सूभूऽ१षाता। ऊऽ२३४पा। हाऽ३हाइ। ब्रह्माणिसवना। निवृत्रहान्॥ परमाऽ२३ज्याः। आर्चाऽ३हाइ। षमा। औऽ३होवा। होऽ५इ॥ डा॥

(दी. ३। प. १५। मा. ८) ७ (णे।४६३)

(२६९।२)

आनोविश्वासुहाहाव्याम्॥ इन्द्रः२समत्सुभूषतो। पब्राऽ२३ह्मा। णिसवना। निवृत्रहान्॥ परमाऽ२३ज्याः। आर्चाऽ३हाइ॥ षमा। औऽ३होवा। होऽ५इ॥ डा॥

(दी. ६। प. ११। मा. ५) ८ (कु।४६४)

(२६९।३)

आनाविश्वासुहाव्याम्॥ इन्द्राम्। सुमत्सुभूषत। उपाब्राऽ१ह्माऽ२। णिसवनानिवृत्रहन्॥ परामाऽ१ज्याऽ२ः॥ ऋचीषाऽ२३माऽ३४३। ओऽ२३४इ॥ डा॥

(दी. ६। प. ९। मा. ५) ९ (घु।४६५)

(२७०।१) ॥ प्रजापतेर्निधनकामम्। प्रजापतिर्बृहतीन्द्रः॥

तवेदिन्द्राऽ५वमंवसू॥ त्वंपुष्यसिमध्यमम्। सात्रावाऽ२३४इश्वा। स्यापरमस्यराजसि॥ नकिष्ट्वाऽ२३४गो॥ षूवृण्वाऽ२३ताइ। होवाऽ३होइ। होऽ। वाहाऽ३१उवाऽ२३४५॥

(दी. ३। प. ९। मा. ५) १० (दु।४६६)

(२७१।१)॥ इन्द्रस्य प्रियाणि त्रीणि, वसिष्ठस्य वा। त्रयाणां इन्द्रो बृहतीन्द्रः॥

क्वेयथा॥ कुवेदसाऽ२इ। औहोऽ२। औहोइ। औऽ३होऽ२३४वा। पुरुत्राचाइत्।
हितेमनाऽ२ः। औहोऽ२। औहोइ। औऽ३होऽ२३४वा। अलर्षियू। ध्माखजकृऽ२त्।
औहोऽ२। औहोइ। औऽ३होऽ२३४वा॥ पुरन्दरा। प्रगायात्राऽ२ः। औहोऽ२। औहोइ।
औऽ३होऽ२३४वा॥ अगाऽ३। साऽ२इषूऽ२३४औहोवा॥ सुश्र॰साऽ२३४५ः॥

(दी. १२। प. २३। मा. १३) ११ (जि।४६७)

(२७१।२)

कुवाकुवा॥ याथा। कुवेदसाइ। ऊवाइ। औऽ३होऽ२३४५। पुरुत्राचाइत्। हितेमनाः।
उवाइ। औऽ३होऽ२३४५। अलर्षियू। ध्माखजकृत्। ऊवाइ। औऽ३होऽ२३४५॥ पुरन्दरा।
प्रगायात्राः। ऊवाइ। औऽ३होऽ२३४५॥ अगाऽ३। साऽ२इषूऽ२३४औहोवा॥
सुश्राऽ३॰साऽ२३४५ः॥

(दी. ७। प. २०। मा. १३) १२ (त्रि।४६८)

(२७१।३)

क्वेयथकुऽ३वाइदाऽ२३४सी॥ पुरुत्राचित्। हिताइमाऽ२३नाः। आलर्षि। युध्माखजकृऽ३त्।
हाउवा॥ पुरंदाऽ२३रा। प्रगायात्राऽ२ः॥ अगाऽ२३। साऽ२इषूऽ२३४औहोवा॥ प्सूऽ२३४५॥

(दी. ५। प. ११। मा. ९) १३ (पो।४६९)

(२७२।१)॥ ऐन्द्राणि वासिष्ठानि वा, वैरूपाणि त्रीणि। त्रयाणां वसिष्ठो बृहतीन्द्रः॥

वयमेनाम्॥ आऽ२इदाऽ२३४औहोवा। हीऽ२३४याः। अपीपेमेहवज्रिणम्।

तास्माऽ२ऊवाऽ२। द्यसवनाइ। सूतंभाराऽ२॥ आनूनाऽ२३०भू॥ षातश्रुते।

इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ९। प. १२। मा. ८) १४ (थे।४७०)

(२७२।२)

वयमेनाम्॥ इदाऽ२हायाः। अपौहोइ। पेमौहोइ। इ। हावज्रिणाम्॥ तस्माउवा। द्यासवनाइ।

सूतंभरा॥ आनौहो। नंभौहो॥ षातश्रुताऽ३१उवाऽ२३॥ ऊऽ३४पा॥

(दी. १२। प. १३। मा. ८) १५ (ज्यै।४७१)

(२७२।३)

वयमेनमिदा। हियाओऽ२३४वा। इयाहाइ॥ हुवेहोऽ२इ। अपीपेमेहावज्रिणाऽ२म्।

तस्माउवद्यसवनाइ। सूतंभाराऽ२। ईऽ३या॥ आनूनाऽ२३४०भू॥ षताश्रूऽ२३४५ताऽ६५६इ॥

श्रवाऽ३साऽ२३४५इ॥

(दी. ८। प. ११। मा. ८) १६ (टै।४७२)

सप्तदश चतुर्थः खण्डः॥४॥ दशतिः॥८॥

(२७३।१) ॥ पौरहन्मनम्। पुरुहन्मा बृहतीन्द्रः॥

योराजाऽ३चर्षणाइनाम्॥ यातारथे। भिराध्राऽ१इगूऽ२ः॥ ध्राइगूऽ२ः। वाइश्वासाऽ३म्।

तरुताऽ३। तरुताऽ३। पार्त्तानाऽ२३४नाम्॥ ज्याइष्ठंयोवा। त्राहागाऽ२३४र्णाइ॥

त्रहाऽ५गृणाइ॥ होऽ५इ॥ डा॥

(दी. ५। प. १३। मा. १३) १७ (बि।४७३)

(२७३।२) ॥ प्राकर्षम्। प्रकर्षो बृहतीन्द्रः॥

योराजाच। षणाऽ३२३४इनाम्॥ यातारथेभिरध्राऽ२३इगूः। विश्वासान्तरुतापृतानाऽ२३नाम्॥

ज्याऽ२३इष्ठाम्॥ योवृत्रंहोवाऽ३ओऽ२३४वा। गाऽ५र्णोऽ६हाइ॥

(दी. ९। प. ७। मा. ९) १८ (थो।४७४)

(२७४।१) ॥ इन्द्रस्याभयङ्करम्। इन्द्रो बृहतीन्द्रः॥

यतआऽ३इन्द्राभयामहाइ॥ ततोनोअभयंकाऽ२३र्धी। मघवञ्छग्धितवतन्नऊताऽ२३याइ॥

विद्वाइषोऽ२३वी॥ मार्द्धोजहि। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ५। प. ८। मा. ८) १९ (बै।४७५)

(२७५।१) ॥ कावषे द्वे। द्वयोः कवषो बृहतीन्द्रो वास्तोष्पतिः॥

वास्तोष्पताइ॥ ध्रुवा। स्थूणाओऽ२३४वा। अꣳसत्रꣳसोम्यानाऽ२म्।

द्रुप्सःपुरांभेत्तश्शश्वताऽ२३इनाम्॥ आऽ२३४इन्द्राः॥ मुनीऽ२। नाऽ३१उवाऽ२३॥

साऽ२३४खा॥

(दी. ९। प. ९। मा. ८) २० (धे।४७६)

(२७५।२)

वास्तोष्पतेध्रुवा। स्थूणाऽ३। आऽ२३४। सत्रꣳसो। म्यानाम्॥

द्रप्सःपुरांभेत्ताशश्वताऽ२३इनाम्॥ आऽ२३इन्द्राः॥ मुनीऽ२। नोऽ२३४वा॥ साऽ२३४खा॥

(दी. ११। प. १०। मा. ५) २१ (ङु।४७७)

(२७६।१) ॥ सूर्यसाम। सूर्यो बृहती सूर्यः॥

बण्महा२ऽ३असिसूर्यो॥ बाडादित्य। महा२आऽ१साऽ२३४इ। महस्तेसतोमहिमापनि।

ष्टाऽ३मा॥ मह्वादाऽ३इवाऽ३॥ महोऽ२३४वा। आऽ५सोऽ६हाइ॥

(दी. ६। प. ८। मा. ५) २२ (गु।४७८)

(२७७।१) ॥ वैश्वदेवे, आनूपे, वाध्र्यश्वे वा द्वे। आनूपो बृहतीन्द्रः॥

अश्वीअश्वी॥ रथीसुऽ३रूपाऽ१ईऽ२त्। गोमा२यदि। द्रातेऽ१साखाऽ२। श्वात्राऽ२भाजाऽ२।

वयसासचतेसाऽ२३दा॥ चन्द्राइर्याऽ३तीऽ३॥ साऽ२३भाऽ३म्। ऊऽ३४५पोऽ६हाइ॥

(दी. ४। प. ९। मा. ६) २३ (धू।४७९)

(२७७।२)

अश्वीरथीसुरूपाऽ६ईत्॥ गोमा२यदिन्द्रतेसखाउवाऽ२३होवाऽ२३हाऽ२ईया।

श्वात्राभाजावयसासचतेसदाउवाऽ२३होवाऽ२३हाऽ२ईया॥ चन्द्राइर्याऽ१तीऽ२॥ साभामुप।

इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. १३। प. ८। मा. ८) २४ (डै।४८०)

(२७८।१) ॥ वैरूपम्। विरूपो बृहतीन्द्रः सूर्यः॥

यद्यावाऽ२३इन्द्रतेशताम्॥ शतंभूमीरुतस्यूऽ२ः। नत्वावज्रिन्त्सहस्र२सूर्याअनूऽ२॥

नाजाऽ२तामाऽ२३॥ ष्टरोऽ२३४वा। दाऽ५सोऽ६हाइ॥

(दी. ७। प. ६। मा. ५) २५ (चु।४८१)

(२७९।१) ॥ नैपातिथे द्वे। द्वयोर्निपातितिथिर्बृहतीन्द्रः॥

यदिन्द्रप्रागपाक्॥ उदाक्। न्यग्वाहूयसेनृभाऽ२इः। सिमापुरूनृषूतोअ। सियानवाऽ२इ॥

आसीऽ२प्राशाऽ२॥ धतोवाऽ३ओऽ२३४वा। र्वाऽ५शोऽ६हाइ॥

(दी. ८। प. ८। मा. ८) २६ (डै।४८२)

(२७९।२)

यदिन्द्रप्रागपागुदाऽ६गे॥ नायग्वाहू। यसाइनृभीऽ३ः। हा। औहोऽ२३४हा।

सिमाऽ२पुरूनृषूतोअ। सियानवेऽ२३। हा। औहोऽ२३४हा॥ असाइप्राशाऽ३। हा।

औहोऽ२३४हा॥ धाऽ२तूऽ२३४औहोवा॥ र्वाऽ२३४शे॥

(दी. १३। प. १४। मा. ५) २७ (दु।४८३)

(२८०।१)॥ कौमुदस्य बृहतः सामनी द्वे। (द्वयोः कुमुदो बृहत्) कौमुदस्य बृहद् बृहतीन्द्रः॥

कस्तमिन्द्रा॥ त्वाऽ२वासाऽ२उ॥ आमर्त्योदधर्षताइ। श्रद्धाहाइतेऽ२। माघवन्पा।

रियाइदाऽ१इइवीऽ२॥ वाजीवाजाऽ२म्॥ सिषाऽ२३। साऽ२ताऽ२३४औहोवा॥

ऊऽ३२३४पा॥

(दी. ८। प. १०। मा. ७) २८ (णे।४८४)

(२८०।२)

कस्तमिन्द्रत्वा। वसाऽ३उ। आऽ२३४। मर्त्योदध। षताइ॥ श्रद्धाहाइतेऽ२। माघवन्पा।

रियाइ। दाइवाओऽ२३४वा। ऊऽ२३४पा॥ वाजीवाजाऽ२म्॥ सिषाऽ२३।

साऽ२ताऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. ८। प. १४। मा. ८) २९ (द्वै।४८५)

(२८१।१)                    ॥ वाचस्साम। वाक्बृहतीन्द्रः॥

इन्द्राग्नीअपादियाऽ६मे॥ पूर्वागाऽ२त्। पद्वताइभाऽ१याऽ२ः। हित्वाशिरोऽ२जिह्वयारा।

रापच्चाराऽ२त्॥ त्रिꣳशत्पदा॥ नियाऽ२३। क्राऽ२माऽ२३४औहोवा॥ ऊऽ३२३४पा॥

(दी. १०। प. ९। मा. ६) ३० (भू।४८६)

(२८२।१)          ॥ वाम्रे आशीले वा द्वे। द्वयोर्वम्रो बृहतीन्द्रः॥

इन्द्रनेदीयएदि। हाइ। मितमे। धा॥ भिरूतिभिः॥ आशन्ताऽ२३मा। शन्तमाभिरभिष्टिभिः॥

आस्वाऽ२३पे॥ स्वाऔऽ३होऽ३। पिभिरोऽ२३४५इ॥ डा॥

(दी. ८। प. ११। मा. ६) ३१ (टू।४८७)

(२८२।२)

इन्द्रनेदीयएदि। हाऽ। मितमे। धा। भिरूतिभाइः॥ आशन्तमशन्तमाऽ२भाइः। आभिष्टिभिः॥

आस्वाऽ२पाइस्वाऽ२३॥ हाऽ३। पिभिरोऽ२३४५इ॥ डा॥

(दी. ८। प. ११। मा. ९) ३२ (टो।४८८)

॥ षोडश पञ्चमः खण्डः॥५॥ दशतिः॥९॥

(२८३।१)  ॥ गौरीविते, प्रहितौ द्वौ, वासुक्रे वा। द्वयोर्गौरीवितिर्बृहतीन्द्रः॥

इतऊती॥ वोऽ३ओजाऽ३राम्। औऽ३होऽ३वा। प्रहेतारमप्राहीऽ३ताम्। औऽ३होऽ३वा।

आशुंजेतारऽ३ꣳहाइताऽ३राम्। औऽ३होऽ३वा॥ रथाइतममतूर्त्ताऽ२३४०तू॥ ग्रियाऽ३।

वाऽ२र्द्धाऽ२३४औहोवा॥ स्तुषेऽ१॥

(दी. ९। प. ११। मा. ८) ३३ (तै।४८९)

(२८३।२)

इतऊतीवोअजाऽ६राम्॥ प्रहेतारमप्रहितमुहुवाऽ२३होइ। आशुंजेतार२हाइतारमुहुवाऽ२३हो॥

रथी। तमाऽ२म्। अतूर्ताऽ२३४०तू॥ ग्रियाऽ३। वाऽ२र्द्धाऽ२३४औहोवा॥

स्तौऽ३षाऽ२३४५इ।

(दी. १२। प. ९। मा. ८) ३४ (झै।४९०)

(२८४।१) ॥ आत्रे द्वे। द्वयोरत्रिर्बृहतीन्द्रः॥

मोषुत्वावा॥ घाताऽ२३४५ः। चाऽ२३४ना। आरेअस्मन्निरीऽ२रमन्। आराऽ१त्ताद्वाऽ२।

साधमादाऽ२म्। नाआगहि॥ आइहवासाऽ२न्। ऊपश्रुधि। इडाऽ२३भाऽ३४३।

ओऽ२३४५इ॥ डा॥

(दी. ६। प. १२। मा. ८) ३५ (खै।४९१)

(२८४।२)

मोषुत्वावाघतश्चनाऽ६ए॥ आरेअस्मन्निरीरमाऽ२न्। हाऽ२ऊऊवाऽ२इ। ऊ।

आरात्ताद्वासधमादाऽ२म्। हाऽ२ऊऊवाऽ२इ। ऊऽ२। नआगाऽ२३४ही॥ आइह।

वासौवाओऽ२३४वा॥ उपश्रूऽ२३धाऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ११। प. १३। मा. १५) ३६ (गु।४९२)

॥ इति ग्रामे गेय-गाने सप्तमः प्रपाठकः॥७॥

(२८५।१)                ॥ गौरीविते द्वे। द्वयोर्गौरीवितिर्बृहतीन्द्रः॥

सुनोतसोमपान्नाऽ६ए॥ सोममिन्द्राऽ२३। होवाऽ३हा। यवज्राऽ२३इणाइ।

पचतापक्ताइरवसेकृ। णूऽ। ध्वाऽ१मीऽ२३द्धाइ॥ पृ। णान्। आइत्पृऽ३हा॥

णताइमाऽ२३याऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ६। प. १३। मा. १०) १ (गौ।४९३)

(२८५।२)

सुनोतसोमपा। आन्नाओऽ२३४वा। हयाहाइ॥ सोममिन्द्राऽ२। हुवेऽ२। हुवेऽ२हो।

यावज्रिणाऽ२इ। पचतापक्ताइरवसेकृ। णू। ध्वाऽ१मीऽ२३द्धाइ॥ पृ। णान्। आइत्पृऽ३हा।

णताइमाऽ२३याऽ३४३ः। ओऽ२३४५इ॥ डा॥ः

(दी. ७। प. १६। मा. १०) २ (चौ।४९४)

(२८६।१)                ॥ वामदेव्यम्। वामदेवो बृहतीन्द्रः॥

यःसत्राहाविचर्षणिः। इन्द्रन्ताऽ३ꣳहूमहेवयाम्॥ इन्द्रन्तꣳहूमहेवाऽ२३याम्।

सहस्रमन्योतुविनृम्णसत्पाऽ२३ताइ॥ भवासाऽ२३मा॥ त्सूनोवृधे। इडाऽ२३भाऽ३४३।

ओऽ२३४५इ॥ डा॥

(दी. १०। प. ९। मा. ५) ३ (भु।४९५)

(२८७।१)          ॥ अश्विनोः साम। अश्विनो बृहतीन्द्र अश्विनौ॥

शुचीभिर्नाऽ५ः शचीवसू॥ दिवानक्तंदिशस्यताम्। मावाऽ२म्। रातिरुपदसत्कदाचना॥

आस्माऽ२त्॥ रातिःकदोऽ२३४वा। चाऽ५नोऽ६हाइ॥

(दी. ५। प. ७। मा. ४) ४ (फी।४९६)

(२८८।१)॥ वसिष्ठस्य वासिष्ठस्य वा, पज्रस्य पाज्रस्य वा, पज्राणि त्रीणि। त्रयाणां वसिष्ठो बृहतीन्द्रो वरुणः॥

यदाकादा॥ चाऽ२माऽ२३४औहोवा। ढूऽ२३४षे। स्तोताजरेतमर्तियऽ३ः। आदिद्वन्द्वे। तावरुणाऽ२३४म्। विपाऽ३४गिरा॥ धार्त्तारांवीऽ२३॥ व्राऽ२ताऽ२३४औहोवा॥ नाऽ२३४५म्॥

(दी. ९। प. १०। मा. ५) ५ (नु।४९७)

(२८८।२)

यदाकदाचमाहाउ॥ ढूषाऽ२इस्तोताऽ२। जराइ। तमर्तियाः। आदिद्वन्दा। औहोऽ३हाऽ३। हाऽ३इ। तावाऽ२रूऽ२३४णाम्। विपागिरा॥ धर्त्तारंव्या। औहोऽ३हाऽ३। हाइ॥ व्रातानाम्। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. १०। प. १६। मा. ९) ६ (पो।४९८)

(२८८।३)

यदाऽ४क। दाऽ४चमी। ढुषाऽ३इ। स्तोता॥ जराइ। तमार्त्तायाऽ३ः। आदाइद्वन्दाऽ३इ। तावाऽ२रूऽ२३४णाम्॥ विपा। गिरौवाओऽ२३४वा। धर्त्ता। रंव्यौवाओऽ२३४वा॥ व्रताऽ५नाम्। होऽ५इ॥ डा॥

(दी. ३। प. १५। मा. १०) ७ (णो।४९९)

(२८९।१) ॥ सौभरे द्वे। सौभरिर्बृहतीन्द्रः॥

पाहिगाआ। धसोमाऽ२३दाइ। आइन्द्रायमे। धियाताऽ२३इथाइ। यःसंमिश्लोहरियोर्यः।

हाइरण्यायाऽ२ः॥ आइन्द्रोवाऽ३ज्री॑ऽ३॥ हिरोऽ२३४वा। ण्याऽ५योऽ६हाइ॥

(दी. ८। प. ९। मा. १०) ८ (ढौ।५००)

(२८९।२)

पा। ह्येपाही॥ गाअन्धसोमाऽ२३दाइ। आइन्द्रायमे। धियाताऽ२३इथाइ।

यसंमिश्लोऽ२हरियोर्यः। हाइरण्यायाऽ२ः॥ आइन्द्रोवाऽ३ज्रीऽ३। हिरोऽ२३४वा।

ण्याऽ५योऽ६हाइ॥

(दी. ८। प. १०। मा. १०) ९ (णौ।५०१)

(२९०।१) ॥ इन्द्रस्य वैयश्वम्। व्यश्वो बृहतीन्द्रः॥

उभयश्शृणवच्चनाऽ६ए॥ आइन्द्रोऽ२अर्वागिदंवचाऽ२३ः। होवाऽ३हाइ। सत्राचियामघवाऽ२न्।

सो। मापाऽ३हाइ। ताऽ२३४याइ॥ धियाशाविष्ठआऽ२३होइ॥ गमात्। औऽ२३होवा।

होऽ५इ॥ डा॥

(दी. ६। प. १२। मा. १२) १० (खा।५०२)

(२९१।१) ॥ सहस्रायुतीये, प्रजापतेर्महोविशीये वा द्वे। प्रजापतिर्बृहतीन्द्रः॥

महेचनोवा॥ त्वाअद्राऽ२३४इवाः। पुराशुल्का। यऽ३दायासाऽ३इ। नस। हस्राऽ३।

यानायुता। यवाज्राइवोऽ३॥ नश। तायाऽ३॥ शाऽ२३ताऽ३। माऽ३४५घोऽ६हाइ॥

(दी. ६। प. १२। मा. ६) ११ (खू।५०३)

(२९१।२)

महेचाऽ३नत्वाअद्रिवाः॥ पाराशुल्का। यदायाऽ१साऽ२इ। नसहस्राऽ२। यनायुतायावज्रिऽ२ः॥

नशाताऽ२३या॥ शताऽ२३। माऽ२धाऽ२३४औहोवा॥ महोविशेऽ१॥

(दी. ९। प. ९। मा. ५) १२ (धु।५०४)

(२९२।१) ॥ इन्द्राण्यास्साम। इन्द्राणी बृहतीन्द्रः॥

वस्याः२इन्द्रासिमे। हाउपितूः॥ उताभ्राऽ२३४तूः। अभूञातौ। वाओऽ२३४वा। माताचामौ।

वाओऽ२३४वा॥ छदयथः। साऽ३मावासौ। वाओऽ२३४वा॥ वसूत्वानौ। वाओऽ२३४वा॥

यरोऽ२३४वा। धाऽ५सोऽ६हाइ॥

(दी. ४। प. १४। मा. १०) १३ (धौ।५०५)

सप्तदश षष्ठः खण्डः॥६॥ दशतिः॥१०॥

इति तृतीयः प्रपाठकः॥३॥

(२९३।१) ॥ सौभरम्। सुभरिर्बृहतीन्द्रः॥

इमाऽ३४इ॥ इमइ। द्रायसुन्वाऽ६इराइ॥ सोमासोदध्याशिराः।

ताः२आमदायवज्रहस्तपीतायाइ॥ हराऽ२३हो। भ्यायाऽ२३हो॥ हियोऽ२३।

काऽ२आऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. १२। प. १०। मा. ९) १४ (श्वो।५०६)

(२९४।१) ॥ गार्त्समदम्। गृतसमदो बृहतीन्द्रः॥

इममन्द्राऽ५मदायताइ॥ सोमाश्चिकित्रउक्थिनाः। माऽ१धोऽ२ःपापाऽ२।

नउपनोगिराःशाऽ१र्णूऽ२॥ रास्त्वस्तोऽ२३त्रा॥ यगिर्वाऽ२३णाऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ५। प. ८। मा. ७) १५ (बे।५०७)

(२९५।१) ॥ वाचस्साम। वाग्बृहतीन्द्रः॥

आत्वद्यासाऽ६बर्दुघाम्॥ हुवाइगाऽ२यत्रवेऽ२पसम्। आइन्द्रधेऽ३नूम्। सुदुघाम्। आऽ।

नियाऽ२माऽ२३४इषाम्॥ उरुधाऽ२३राम्॥ अरंकाऽ२३र्ताऽ३४३म्। ओऽ२३४५इ॥ डा॥

(दी. ५। प. १०। मा. ११) १६ (म।५०८)

(२९६।२) ॥ बार्हदुक्थम्। बृहदुक्थो बृहतीन्द्रः॥

नत्वाबृह। तोऽ५द्रयाः॥ वरन्तइन्द्रवीडाऽ२३वाः। याछिक्षासीऽ२। स्तूवताइमाऽ२। वतेवसू॥

नकिष्टाऽ२३दा॥ मिनाताऽ२३इताऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ४। प. १०। मा. ७) १७ (ने।५०९)

(२९७।१) ॥ नैपातिथं वाश्रम् वा। निपातिथिर्बृहतीन्द्रः॥

कईंवेदा॥ सुताइसाऽ१चाऽ२। पिबन्तंकद्वायोऽ१दाधाऽ२इ।

अयंयःपुरोविभिनत्ताओऽ१जासाऽ२॥ मन्दानाऽ२३ःशीऽ३॥ प्राऽ२याऽ२३औहोवा॥

धाऽ२३४साः॥

(दी. ६। प. ७। मा. ६) १८ (खू।५१०)

(२९८।१) ॥ तौरश्रवसम्। तुरश्रवा बृहतीन्द्रः॥

यदिन्द्राऽ२३शासोअव्रताम्॥ च्यावयास। दाऽ३सास्पारौ। वाऽ३२। अस्माकामौ। वाऽ३२।

शुंमघवन्। पुरूस्पृहौ। वाऽ३२॥ वसाव्यायौ। वाऽ३२३॥ धिबोऽ२३४वा। हाऽ५योऽ६हाइ॥

(दी. ४। प. १३। मा. ४) १९ (दी।५११)

(२९९।१)　　॥ त्वाष्ट्र्यास्साम। त्वाष्ट्री बृहतीन्द्रो विश्वेदेवाः॥

त्वष्टाऽ३४। नोदैवियम्। वचाः। पर्जन्योब्रह्मणस्पाऽ२३तीः॥ पुत्रैर्भ्रातृभिरदितिर्न्नुपातूऽ२३नाः॥

दुष्टाराऽ२३०त्रा॥ मणंवाऽ२३चाऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ६। प. ९। मा. ६) २० (घू।५१२)

(३००।१)　　॥ अदितेः साम। अदितिर्बृहतीन्द्रः॥

कदाचनास्ताऽ६रीरसाइ॥ नेन्द्रासाऽ२३४श्चा। साइदाशूऽ२३४षाइ। उपोपेन्नुमघवन्भूयइत्।

हाऽ२इनूऽ२३४ताइ॥ दानंदाऽ२३४इवा॥ स्यपोऽ२३४वा। च्याऽ५तोऽ६हाइ॥

(दी. ६। प. ८। मा. ९) २१ (गो।५१३)

(३०१।१)　　॥ आजीगर्तम्। अजीगर्तिर्बृहतीन्द्रः॥

आइहीऽ२। आइहीहाइ। युंक्ष्वाहिवाऽ३र्त्राऽ३हन्तम॥ हारीइन्द्र। परावाऽ१ताऽ२३४ः।

अर्वाऽ३४चीनाः। मांघवन्त्सो। मपाइताऽ१याऽ२३४इ॥ उग्राऽ३४ऋष्वाऽ३इ॥

भिरोऽ२३४वा। गाऽ५होऽ६हाइ॥

(दी. ४। प. ११। मा. ११) २२ (ता।५१४)

(३०२।१)　　॥ माधुच्छन्दसम्। मधुच्छन्दा बृहतीन्द्रः॥

त्वामिदा। होइ। हियोनराऽ६ए॥ अपाइप्यन्वा। ज्राइभूर्णाऽ२३४याः। सइन्द्रस्तोमवाहसः।

इहाश्रूधा। औहोऽ३४वाहाइ॥ उपास्वासा। औहोऽ३४वाहा॥ रमागाऽ२३हाऽ३४३इ।

ओऽ२३४५इ॥ डा॥

(दी. १०। प. १३। मा. १०) २३ (बौ।५१५)

दश सप्तमः खण्डः॥७॥ दशतिः॥१॥

(३०३।१)  ॥ उषसस्साम। उषा बृहतीन्द्रः॥

प्रताइ। इहा। आइ। इहा। उवद। शिऽ३आयती। आयती॥ उच्छा। इहा। आऽ। इहा।

तीदु। हिऽ३तादिवाऽ२ः। आदिवाऽ२ः॥ अपो। इहा। ओऽ। इहा। माहीवृणुतेच।

क्षुषातमाऽ२ः। आतमाऽ२ः॥ ज्योताइ। इहा। आइ। इहा। कृणो। तिऽ३सूनरीऽ२।

ओनरीऽ२३४३। ओऽ२३४५इ॥ डा॥

(दी. ५। प. ३०। मा. १०) २४ (मौ।५१६)

(३०४।१)  ॥ अश्विनोः साम। अश्विनौ बृहतीन्द्रः (अश्विनौ वा)॥

इमाउवांदिविष्टयाऽ२३४ऐही॥ उस्राहवन्तेअश्विनाऽ२३४ऐही॥

अयंवामह्वेवसेशचीवसूऽ२३४ऐही॥ विशंविश॑हिगच्छाथाऽ२३४ऐही। होऽ५इ॥ डा॥

(दी. १२। प. ६। मा. ७) २५ (चे।५१७)

(३०५।१)  ॥ अश्विनोः संयोजनम्। अह्विनौ बृहतीन्द्रः (अश्विनौ वा)॥

कुष्ठःकोवामश्विनाआ॥ तापानोदे। वामर्तायाऽ३ः। होवाऽ३हाऽ३४इ। घ्नताऽ३४वामाऽ१।

श्नायाऽ३। होवाऽ३हाऽ३४इ। क्षपाऽ३४माणाः। आ॑शूनाऽ३। होवाऽ३हाऽ३४इ॥

इत्थाऽ३४मुवाऽ३त्॥ उवाऽ२न्। यथाऽ३४औहोवा॥ ऊऽ२३४पा॥

(दी. १०। प. १४। मा. ९) २६ (भ्वो।५१८)

(३०६।१)  ॥ अश्विनोः साम। अश्विनौ बृहतीन्द्रः (अश्विनौ वा)॥

अयाऽ३४म्। अयंवांम॥ धुमत्ताऽ६माः॥ सुतःसोमोऽ२दिविष्टिषु। ओऽ३हा। ओऽ३हाऽ३४।

ओहा। तामश्विनापिबतंतिरोअह्नियम्। ओऽ३हा। ओऽ३हाऽ३४। ओहा॥ धताꣳराऽ१त्नाऽ२।

ओऽ३हा। ओऽ३हाऽ३४। ओहा॥ निदाऽ२३। शूऽ२पाऽ२३४औहोवा॥ ऊऽ२३४पा॥

(दी. १०। प. १८। मा. ५) २७ (बु।५१९)

(३०७।१) ॥ सोमसाम। सोमो बृहतीन्द्रः (सोमो वा)॥

आत्वासोमा। स्य। गल्दाऽ२याऽ२३४औहोवा। सदाऽ२याचन्नहंजियाऽ२३।

भूर्णाओऽ२३४वा। सृगन्नसवनेषुचुक्रुधम्॥ कईश्राऽ२३नाम्॥ नायाचिषत्।

इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. १०। प. ११। मा. ७) २८ (पे।५२०)

(३०८।१) ॥ आजमायवम्। अजमायुर्बृहतीन्द्रः॥

अध्वर्योद्राऽ५वयातुवाम्॥ सोममिन्द्राऽ२ः। पिपासाऽ१तीऽ२। उपोऽ२नूनंयुयुजेवृ।

षाणाऽ१हारीऽ२॥ आचाजाऽ२३गा॥ मवृत्रहा। औऽ३होवा। होऽ५इ॥ डा॥

(दी. ७। प. १०। मा. ३) २९ (जि।५२१)

(३०९।१) ॥ समुद्रप्रेयमेधम्। प्रियमेधा बृहतीन्द्रः॥

अभीषतस्तदाहाउ॥ भरा॥ इन्द्रज्यायःकनीयाऽ२३साः। पुरूवसुर्हिमघवन्बभूवाऽ२३इथा॥

भराइभाऽ२३रे॥ चहव्यः। इडाऽ२३भाऽ३४३। ओऽ२३४इ॥ डा॥

(दी. ६। प. ९। मा. ६) ३० (घू।५२२)

(३१०।१) ॥ वैरूपे द्वे। द्वयोरिन्द्रो बृहतीन्द्रः॥

यदिन्द्राऽ२३यावतस्तुवाम्॥ एतावदहमीशीया। स्तोताराऽ२३मीत्। दाधिषे।

रदावाऽ१साऽ२उ॥ नपापाऽ२३४त्वा॥ यारौवाऔऽ२३४वा। साऽ५इषोऽ६हाइ॥

(दी. ९। प. ८। मा. ६) ३१ (दू।५२३)

(३१०।२)

यदिन्द्रयावतस्तुवाम्॥ आइताऽ३। वादाऽ३हामी। शायाऽ३ऽऽ२। स्तोतारामीऽ२३त्।

दधिषेरदा। वासाऽ३ऽऽ२उ॥ नापापात्वाऽ२३॥ यारौवाओऽ२३४वा। साऽ५इषोऽ६हाइ॥

(दी. ४। प. १०। मा. ७) ३२ (ने।५२४)

(३११।१) ॥ वैश्वदेवम्। विश्वेदेवा बृहतीन्द्रः॥

त्वमिन्द्रोहाइ। प्रतूर्तिष्वोवा॥ अभिविश्वाः। असाइस्पाऽ१र्द्धाऽ२ः। अशस्तिहाजनितावृ।

त्रातूऽ१रासाऽ२इ॥ त्वां०तूऽ१र्याऽ२॥ तरुष्यता। औऽ३होवा। होऽ५इ॥ डा॥

(दी. ४। प. ११। मा. ६) ३३ (तू।५२५)

(३१२।१) ॥ पूरीषम्। अथर्वा बृहतीन्द्रः॥

प्रयोरिक्षिओजसाऽ६ए॥ दिवःसदोऽ२भ्यस्परि। नत्वाविव्या। औहोऽ३वा। चा। रजः।

औहोऽ३वाइ। द्रपार्थिवाम्॥ अतिवाऽ२३इश्वाम्॥ वावक्षिथ। इडाऽ२३भाऽ३४३।

ओऽ२३४५इ॥ डा॥

(दी. ६। प. १३। मा. ८) ३४ (गै।५२६)

एकादश अष्टमः खण्डः॥८॥ दशतिः॥२॥ इति बार्हतमैन्द्रम्॥

(३१३।१) ॥ प्राकर्षम्। प्रकर्षः, त्रिष्टुबिन्द्रः॥

असौहोवाऽ३हाइ। वीऽ२३४दे। वांगोऋ। जीकमन्धाः॥ न्यौहोवाऽ३हा। स्मीऽ२३४नी।

द्रोजनु। षेमुवोचा॥ बोधौहोवाऽ३हाइ। माऽ२३४सी। त्वाहरि। अश्वयज्ञेः॥

बोधौहोवाऽ३हाइ। नाऽ२३४स्तो। ममन्ध। सोऽ३४३। माऽ३दाऽ५इषूऽ६५६।

(दी. ११। प. १७। मा. ७) ३५ (खे।५२७)

(३१३।२) ॥ निहवः निहवम् वा॥ वसिष्ठस्त्रिष्टुबिन्द्रः॥

आइहीऽ३। आइही। एहीया। ओऽ२३४वा। हाइ। असाविदेवंगोऋजीकऽ३मान्धाऽ३ः।

आन्धाः। अन्धा। ओऽ२३४वा। हाइ॥ न्यस्मिन्निन्द्रोजनुषेमुऽ३ वोचाऽ३। वोचा। वोचा।

ओऽ२३४वा। हाइ॥ बोधामसित्वाहर्यश्वऽ३याज्ञेऽ३ः। याज्ञैः। यज्ञा। ओऽ२३४वा। हाइ॥

बोधानस्तोममन्धसोमऽ३दाइषूऽ३। आइषू। एषुवा। ओऽ२३४वा। हाइ। आइहीऽ३॥

आइही। एहीया। ओऽ२३४वा। हाऽ३४। औहोवा॥ ईऽ२३४५॥

(दी. १९। प. ३२। मा. १६) ३६ (श्रू।५२८)

॥ इति ग्रामे गेय-गानेऽष्टमस्यार्धः प्रपाठकः॥

(३१४।१) ॥ योनिनी द्वे। द्वयोर्गृत्समदः त्रिष्टुबिन्द्रः॥

योनीः। तआइ। द्राऽ३सद। नाअकारी॥ तामा। नृभाइः। पुरूहूऽ३। ताप्रयाही॥ आसाः।

यथा। नोऽ३अवि। तावृधश्चीत्॥ दादाः। वसू। नीऽ३मम। दाऽ३४३ः।

चाऽ३सोऽ५माऽ६५६इः॥

(दी. नास्ति। प. १७। मा. १३) १ (यि।५२९)

(३१४।२)

योनिष्टआइ। द्रसदनाइ। होवा॥ आकाऽ३। राइतमानृभीः। होवा। पूऽ। रुहूऽ३।

ताप्रयाही। होवा। आसोयथा। नोअविता। होवा॥ वार्द्धाऽ३ः। चाइद्दोवसू। होवा॥

नाइममदः। चसोमैः। होवा। होऽ५इ॥ डा॥

(दी. ६। प. २१। मा. १२) २ (का।५३०)

(३१५।१) ॥औरुक्षये द्वे। द्वयोरुरुक्षयस्त्रिष्टुबिन्द्रः॥

अदर्दरूत्॥ समसृजोविखानि। त्वमर्णाऽ२३४वान्। बद्धधाना२अराम्णाः। महान्ताऽ२३४मी।

द्रपर्वतंवियाद्धः॥ सृजाद्धाऽ२३४राः॥ अवयद्दान। वाऽ२३न्हाऽ३४३न्। ओऽ२३४५इ॥ डा॥

(दी. ५। प. ११। मा. ८) ३ (पै।५३१)

(३१५।२)

अदर्दरुत्समसृजाः॥ विखानि। त्वमर्णवान्बद्धधाना२अराऽ२३म्णाः।

महान्तमिन्द्रपर्वतंवियाऽ२३द्धाः॥ सृजाद्धाराऽ२ः॥ अवाऽ२यद्दान। वाऽ२। याऽ२३४औहोवा॥

हाऽ२३४५न्।

(दी. १०। प. ९। मा. ७) ४ (भे।५३२)

(३१६।१) ॥ पार्थे द्वे। द्वयोः (पृथी वैन्यः) पार्थस्त्रिष्टुबिन्द्रः॥

सूष्वाणासाः॥ इन्द्रस्तु। मसित्वा। सनिष्यन्तश्चित्तुविनृ। म्णवाऽ२३४जाम्। आनः।

भराओऽ२३४वा। सुवितंयस्यको। नाऽ॥ तानात्माना॥ सहिया। माऽ३४३।

तूऽ३वोऽ५ताऽ६५६ः॥

(दी. ३। प. १३। मा. ५) ५ (ङु।५३३)

(३१६।२)

ओऽ३होऽ३होइ। सूऽ२३४ष्वा। णासाः। इन्द्रस्तु। मसित्वा॥ ओऽ३होऽ३होइ। साऽ२३४नी। ष्यन्ताः। चीऽ३त्तुवि। नृम्णवाजाम्॥ ओऽ३होऽ३होइ। आऽ२३४नाः। भरा। सुवितऽ३म्। यस्यकोना॥ ओऽ३होऽ३होइ। ताऽ२३४ना। त्मना। सहिया। माऽ३४३। तूऽ३वोऽ५ताऽ६५६ः॥

(दी. २। प. २१। मा. १०) ६ (चौ।५३४)

(३१७।१) ॥ सौपर्णे द्वे। द्वयोः सुपर्णस्त्रिष्टुबिन्द्रः॥

जगृह्यातेदक्षिणमोहाओहाऽ६ए॥ इन्द्रहाऽ२३स्ताम्। विसूयवो। वसुपाऽ३। ताइवसू। नाम्। ओऽ३। हा। ओऽ३। हाऽ३ए॥ विद्माहित्वा। गोपतीऽ३म्। शूरगो। नाम्। ओऽ३। हा। ओऽ३। हाऽ३ए॥ अस्मभ्यंचाइ। त्राऽ३०वृष। णꣳरयिम्। दाः। ओऽ३। हा। ओऽ३। हाऽ३ए। रयाइन्दाऽ३२उवाऽ३। ऊऽ३४पा। औहोऔहोवाऽ२३४५हाउ। वा॥ ईऽ२३४५॥

(दी. ११। प. ३१। मा. १७) ७ (क्रे।५३५)

(३१७।२)

जगृह्मातेदक्षिणम्। औहौहोवाहाइ॥ इन्द्राहाऽ२३४स्ताम्। वसूयवो। वसुपाऽ३। ताइवसू। नौ। वाओऽ२३४वा। हाऽ३हाइ॥ विद्माहित्वा। गोपतीऽ३म्। शूरगो। नौ। वाओऽ२३४वा। हाऽ३हाइ। अस्मभ्यंचाइ। त्राऽ३०वृष। णꣳरयिम्। दौ। वाओऽ२३४वा। हाऽ३हाऽ३४। औहोवा। ईऽ२३४५॥

(दी. ९। प. २३। मा. १२) ८ (द्रा।४३६)

(३१७।३)॥ वात्सप्राणि त्रीणि। त्रयाणां वत्सप्रिस्त्रिष्टुबिन्द्रः। तृतीयं वात्सप्रम्॥

होईऽ२। होईऽ२। होईऽ२। जगृह्मातेदक्षिणम्। इन्द्रहास्ताऽ२म्। हास्ताऽ२म्। हास्ताऽ२म्॥

वसूयवोऽ२वसुप। तेवसूनाऽ२म्। सूनाऽ२म्॥ सूनाऽ२म्॥ विद्माहित्वागोपतिम्।

शूरगोनाऽ२म्। गोनाऽ२म्। गोनाऽ२म्॥ अस्मभ्यंचित्रंवृष। ण२रयाइन्दाऽ२ः। आइन्दाऽ२ः।

आइन्दाऽ२ः। होइऽ२। होइऽ२। होयाऽ२। वाऽ२३४औहोवा॥ ई२३४५॥

(दी. ११। प. २४। मा. २३) ९ (घ्रि।५३७)

(३१७।४)

आऔहोइ। आऔहोइ। आऔहोऽ६वा। औऽ३होइ। औऽ३होइ। औऽ२३होवा।

जगृह्माताइ। दक्षिणाऽ३म्। इन्द्रहस्तम्। द्रहस्तम्। द्रहस्ताम्॥ वसूयवो। वसूपाऽ३।

ताइवसूनाम्। वसूनाम्। वसूनाम्॥ विद्माहित्वा। गोपतीऽ३म्। शूरगोनाम्। रगोनाम्।

रगोनाम्॥ अस्मभ्यंचाइ। त्राऽ३०वृष। ण२रयिन्दाः। रयिन्दाः। रयिन्दाः। आऔहोइ।

आऔहोइ। आऔहोऽ६वा। औऽ३होइ। औऽ३होइ। औऽ२३होवाऽ३४। औहोवा॥

ईऽ२३४५॥

(दी. १४। प. ३४। मा. ३१) १० (ध्रा।५३८)

(३१७।५) ॥ महावात्सप्रोत्तरम्॥

हाउऽ(३)। ओ। होहोवा। (द्वेत्रिः)। जगृह्माताइ। दक्षिणाऽ३म्। इन्द्रहस्तम्। द्रहस्तम्।

द्रहस्ताम्॥ वसूयवो। वसूपाऽ३। ताइवसूनाम्। वसूनाम्। वसूनाम्॥ विद्माहित्वा।

गोपातीऽ३म्। शूरगोनाम्। रगोनाम्। रगोनाम्॥ अस्मभ्यंचाइ। त्राऽ३०वृष। ण२रयिन्दाः।

रयिन्दाः। रयिन्दाः। हाउऽ(३)। ओऽ। होहोवा। ओऽ। होहोवा। ओऽ। हो। होऽ२।
वाऽ२३४। औहोवा॥ ईऽ२३४५॥

(दी. १२। प. ३८। मा. २३) ११ (ज्रि।५३९)

(३१८।१) ॥ गौरीवितम्। गौरीवितस्त्रिष्टुबिन्द्रः॥

इन्द्रन्नाऽ२३४रो। नेमाधाऽ२३४इता। हवन्ताऽ२३इ॥ यत्पाराऽ२३४याः। यूनाजाऽ२३४ताइ।
धियास्ताऽ२३ः॥ शूरोनाऽ२३४र्षा। ताश्रावाऽ२३४साः। चकामाऽ२३इ॥ आगोमाऽ२३४ती।
व्रजाइभाऽ२३४जा। त्वन्नाऽ३२उवाऽ३। एऽ३। उपाऽ२३४५॥

(दी. नास्ति। प. १४। मा. ९) १२ (लो।५४०)

(३१९।१) ॥ वैदन्वतम्। विदन्वांस्त्रिष्टुबिन्द्रः (सूर्यो वा)॥

वयोहाहाउ॥ सूपर्णाउपसेदुराइन्द्रम्। प्रियमेधाऋषयोनाधमाऽ२३नाः।
अपध्वान्तमूर्णहिपूर्धिचाऽ२३क्षूः॥ मुमुग्धि। औऽ३होऽ३इ॥ आऽ२१। स्माऽ३न्निध।
येऽ३४३। वाऽ३बाऽ५द्धाऽ६५६न्॥

(दी. १०। प. १०। मा. ९) १३ (मो।५४१)

(३२०।१) ॥ यामम्। यमस्त्रिष्टुबिन्द्रः (यमो वा)॥

आऽ२यांम्। अयायम्। औऽ३होऽ३इ। आऽ२इ। ऊऽ२। नाकेसुपार्णमुपयात्पतन्ताम्।
पतन्तम्। औऽ३होऽ३इ। आऽ२इ। ऊऽ२॥ आऽ२याम्। अयायम्। औऽ३होऽ३इ।
आऽ२इ। ऊऽ२। हृदावेनांतोअभ्यचाक्षतत्वा। क्षतत्वौऽ३। होऽ३इ। आऽ२इ। ऊऽ२॥
आऽ२याम्। अयायम्। औऽ३होऽ३इ। आऽ२इ। ऊऽ२। हिरण्यपाक्षंवरुणास्यदूताम्।

स्यदूतम्। औऽ३होऽ३इ। आऽ२इ। ऊऽ२॥ आऽ२याम्। अयायम्। औऽ३होऽ३इ।

आऽ२इ। ऊऽ२। यमस्ययोनौश्चकुनांभुरण्यूम्। भुरण्युम्। औऽ३होऽ३इ। आऽ२इ। ऊऽ२।

आऽ२याम्। अयायम्। औऽ३होऽ३इ। आऽ२इ। ऊऽ२। वाहाऽ३१उवाऽ२३॥ एऽ३।

दिवम्। एऽ३। दिवम्। एऽ३। दिवाऽ२३४५म्।

(दी. १४। प. ५२। मा. ३९) १४ (थो।५४२)

(३२१।१) ॥ ऋतुसामनी द्वे। ऋतुस्त्रिष्टुबिन्द्रः (बृहस्पतिर्वा)॥

ब्रह्मा। ब्राऽ२३ह्मा। जज्ञानंप्रथमंपुरास्तात्। विसाइ। वाऽ२३इसी। मतःसुरुचोवेनआवः॥

सबू। साऽ२३बू। ध्नियाउपमाअस्यवाइष्ठाः॥ सताः। साऽ२३ताः।

चयोनिमसतश्चवाइवाऽ३४३ः। ओऽ२३४५इ॥ डा॥

(दी. ६। प. १४। मा. १४) १५ (घी।५४३)

(३२१।२)

हुवेऽ३हाऽ३इ। हुवेऽ३हाऽ३इ। हिषाऽ३या। ब्रह्मजज्ञा। नाऽ३०प्रथ। मुंपुरस्तात्॥

विसीमताः। सुरुचः। वेनआवाः॥ सबुध्नियाः। उपमाः। अस्यविष्ठाः॥ सतश्चयो। नीऽ३मस।

तश्चविवाः। हुवेऽ३हाऽ३इ। हुवेऽ३हाऽ३इ। हि। षाऽ२ः। आऽ२३४। औहोवा॥ एऽ३।

ऋतममृतम्। एऽ३। ऋतममृतम्। एऽ३। ऋतममृताऽ२३४५म्॥

(दी. ४। प. २७। मा. १७) १६ (थे।५४४)

(३२२।१) ॥ वारवन्तीयम्। इन्द्रस्त्रिष्टुबिन्द्रः॥

अपूर्व्याऔहोहोहाइ॥ पुरुत। मानियस्मै। महेवीरा। याऽ३तव। साइतुराया। विरप्शि।
नाइवज्रिणे। शाऽ३४३०तमानि॥ वचाꣳसिया। स्माऽ३इस्थवि। रायतक्षूः॥ स्थविरायतक्षुः।
स्थवि। राऽ३४३। याऽ३ताऽ५क्षूऽ६५६ः॥ स्थविरायतक्षूऽ२३४५ः॥

(दी. १०। प. १७। मा. ९) १७ (फो।५४५)

॥ एकोनविंशति प्रथमः, नवमः खण्डः॥९॥ दशतिः॥३॥

(३२३।१) ॥ क्षुरपविणी द्वे। इन्द्रस्त्रिष्टुबिन्द्रः (इन्द्राबृहस्पती वा)॥

अवद्राऽ२३४प्साः। आꣳशूमाऽ२३४तीम्। आतीऽ३। ष्ठाऽ२३४५त्॥ ईयानाऽ२३४ःकृ।
ष्णोदाशाऽ२३४भीः। साहाऽ३। स्राऽ२३४५इः॥ आवत्ताऽ२३४मी। द्रःशाचीऽ२३४या।
धामाऽ३। ताऽ२३४५म्॥ आपस्नीऽ२३४ही। तिंनृमाऽ२३४णाः। अधाऽ२द्राऽ२३४औहोवा॥
अधाऽ३द्राऽ२३४५ः॥

(दी. २। प. १६। मा. १०) १८ (चौ।५४६)

(३२३।२)

अवद्रप्साऽ६ए॥ आꣳशुमतीमतिष्ठाऽ२३त्। इयानःकृष्णाः। दाशभिःसहस्राऽ२३इः॥
आवत्तमिन्द्राः। शाचिशाधमन्ताऽ२३म्॥ अपास्नीहितीम्। नृमणाऽ२३ः। अधाऽ५द्राः।
होऽ५इ॥ डा॥

(दी. ५। प. ११। मा. ११) १९ (पा।५४७)

(३२३।३) ॥ स्यौमरश्मे द्वे। स्युमरश्मिस्त्रिष्टुबिन्द्रः॥

अवद्रप्सोअꣳशुमतीम्। औऽ३होऽ३४इ। औहोवा॥ आतीऽ३ष्ठात्। औऽ३होऽ३४इ।

औहोवा। ईयानःकृष्णाः। औऽ३होऽ३४इ। औहोवा। दाश। भाइःसहस्रैः। औऽ३होऽ३४इ।

औहोवा॥ आवत्तमिन्द्राः। औऽ३होऽ३४इ। औहोवा। शाऽचि। यधमन्ताम्।

औऽ३होऽ३४इ। औहोवा॥ अपास्नीहितीम्। औऽ३होऽ३४इ। औहोवा।

नृमाऽ२णाऽ२३४औहोवा॥ अधाऽ३द्राऽ२३४५ः॥

(दी. २१। प. २५। मा. १८) २० (डै।५४८)

(३२३।४)

अवद्रप्सोअꣳशुमतीम्। एऽ३। औऽ३होऽ५वाऽ॥ आताऽ२३४५इष्ठाऽ६५६त्।

ईयानःकृष्णोदशभिस्सहस्रैः॥ आवत्तम्। आऽ। द्राऽ३ःशचि। याधमंताम्॥

अपस्नीहितिंनृमणाः। ओवा॥ अधद्राऽ३आऽ२३४५॥

(दी. ९। प. १२। मा. १०) २१ (थौ।५४९)

(३२४।१) ॥ द्यौताने, धृषतो मारुतस्य सामनी वा द्वे। द्युतानस्त्रिष्टुबिन्द्रः॥

हाऽ३। ओऽ३हाऽ३। ओऽ३हाऽ३। हाइ। वृत्रस्यत्वा। श्वसथात्। ईषमाणाः॥ विश्वेदेवाः।

अजहूऽ३ः। येसखायाः॥ मरुद्भिराइ। द्राऽ३सखि। यन्तेअस्तू॥ अथेमावाइ। श्वाऽ३ःपृत।

नाजयासी। हाऽ३। ओऽ३हाऽ३। ओऽ३हाऽ३। हाऽ३४। औहोवा॥ आऔऽ३होऽ२३४५॥

(दी. ८। प. २२। मा. १०) २२ (ठौ।५५०)

(३२४।२)

होयेऽ३। हयायेऽ३। हया। औहोऽ२३४वा। हाऽ। वृत्रस्यत्वा। श्वसथात्। ईषमाणाः॥

विश्वेदेवाः। अजहूऽ३ः। येसखायाः॥ मरुद्भिराइ। द्राऽ३सखि। यन्तेअस्तू॥ अथेमावाइ।

श्वाऽ३ःपृत। नाजयासी। होयेऽ३। हयायेऽ३। हया। औहोऽ२३४वा। हाऽ३४। औहोवा॥

आऔऽ३हो। आऔऽ३होऽ२३४५॥

(दी. १०। प. २५। मा. ११) २३ (मा।५५१)

(३२५।१) ॥ सोमसामनी द्वे। द्वयोः समस्त्रिष्टुबिन्द्रः (सूर्यो वा)॥

वीधूम्। दद्रादद्रा। णाऽ३२सम। नाइबहूनाम्॥ यूवा। न२सान२सा। ताऽ३०पलि।

तोजगारा॥ देवा। स्यपास्यपा। श्याऽ३कावि। यंमहित्वा॥ आद्या। ममाममा। राऽ३सहि।

याऽ३४३ः। साऽ३माऽ५नाऽ६५६॥

(दी. १। प. १७। मा. ४) २४ (खी।५५२)

(३२५।२)

ह२ऽ४। आऽ४५। ह२। ह२२३४५। विधुंदद्रा। णाऽ३२म। नाइबहूनाम्॥ युवान२सा।

ताऽ३०पलि। तोजगारा॥ देवस्यपा। श्याऽ३कावि। यंमहित्वा॥ ह२ऽ४। आऽ४५। ह२।

ह२२३४५। अद्याममा। राऽ३सहि। याऽ३४३ः। साऽ३माऽ५नाऽ६५६॥

(दी. ४। प. २१। मा. ३) २५ (ति।५५३)

(३२६।१) ॥ इन्द्रवज्रे द्वे। इन्द्रस्त्रिष्टुबिन्द्रः॥

औहोइतुवाम्। हत्यत्सप्तभ्योजायमानाऽ२३४ः॥ औहोअशा। त्रुभ्योअभवःशत्रुरिन्द्राऽ२३४॥

औहोइगूढे। द्यावापृथिवीअन्वविन्दाऽ२३४ः॥ औहोइविभू। मद्भ्योभुवनेभ्योरणंधाऽ२३४५ः॥

(दी. ११। प. ८। मा. १०) २६ (दौ।५५४)

(३२६।२)

श्वोहाइ। हत्यौवाओ॒ऽ२३४वा। सप्तभ्योजायमा। नोवाऽ३। ओवाऽ२३४५॥ अश्वोहाइ।

त्त्रुभ्यौवाओ॒ऽ२३४वा। अभवःश्चत्रुरि। द्रोवाऽ३। ओवाऽ२३४५॥ गूढोहाइ।

द्यौवाओ॒ऽ२३४वा। पृथिवीअन्ववि। दोवाऽ३। ओवाऽ२३४५॥ विभोहाइ।

मद्भ्यौवाओ॒ऽ२३४वा। भुवने। भ्योवाऽ३। ओवाऽ२३४५। रणा५०धाः। होऽ५इ॥ डा॥

(दी. ६। प. २३। मा. ११) २७ (गा।५५५)

(३२७।१)॥ ऋषिप्रमाणपदगणिते अर्द्धवेयः। सूर्यवर्चसो भृष्टिमतः सामनी द्वे।

भृष्टिमांस्त्रिष्टुबिन्द्रः॥

मेडीम्॥ नत्वावज्रिणंभृष्टिमाऽ२३०ताम्। पुरुधस्मानंवृषभꣳस्थिराऽ२३प्स्नूम्।

करोष्यर्यस्तरुषाइर्दुवाऽ२३स्यूः॥ आइन्द्रद्युक्षम्॥ वृत्राऽ२३। हाऽ२णाऽ२३४औहोवा॥

गृणीऽ३षेऽ२३४५॥

(दी. ५। प. ८। मा. ८) २८ (बै।५५६)

(३२७।२)

मेडिन्नत्वा॥ वाऽ३४औहो। ज्राइ। णंभार्ष्टाइमौ। वाऽ३२३४। ताम्। पुराऽ३४औहो।

धस्मानंवृ। षभꣳस्थाइरौ। वाऽ३२३४। प्स्नूम्॥ कराऽ३४औहो। षिअर्यस्त। रुषाइर्दूवौ।

वाऽ३२३४। स्यूः। इंद्राऽ३४औहो। द्युक्षम्। वृत्राऽ२३। हाऽ२णाऽ२३४औहोवा॥

गृणीषेऽ२३४५॥

(दी. ५। प. २१। मा. १४) २९ (पी।५५७)

(३२८।१) ॥ अंकुशौ द्वौ (वसिष्ठौ)। वसिष्ठस्त्रिष्टुबिन्द्रः॥

प्रवाः॥ माहेमहेवृधे। भराधूऽ३वाम्। प्रचाइतसाई। प्रासूमाऽ२३४तीम्॥ कृणुध्वम्।

इहाऽ२वाऽ२३४इशाः॥ पूऽ२३र्वीः। प्रचा। राऽ२३चा। षणाइ। प्रा। औऽ३होवा। होऽ५इ॥

डा॥

(दी. ३। प. १५। मा. ११) ३० (ण।५५८)

(३२८।२)

हृ॒ऽ२३४५। प्रवोमहाइमाऽ२३४हे। वृधाऽ३४३इ। भराऽ२३४त्ध्वाम्॥ हृ॒२३४५।

प्रचेतासाइप्राऽ२३४सू। मताऽ३४३इम्। कृणूऽ२३४त्ध्वाम्॥ हृ॒२३४५।

विशःपूर्वाइःप्राऽ२३४चा। रचाऽ३४३। षणाऽ२३४इप्राः॥ हृ॒ऽ२३४५। हाउहौहोवाऽ६।

हाउवा॥ ईऽ२३४५॥

(दी. ५। प. १६। मा. १२) ३१ (प्रा।५५९)

(३२९।१) ॥ भारद्वाजम्। भरद्वाजस्त्रिष्टुबिन्द्रः॥

शुन॒हुवेममघवानमिन्द्राम्॥ अस्मिन्भरेनृतमंवाजसाऽ२३ताउ।

शृण्वन्तमुग्रमूतयेसमाऽ२३त्सू॥ घ्न। तंवाऽ२३त्रीऽ३। होवाऽ३हा॥ णिसंजितम्।

धनाऽ२३नीऽ३। होवाऽ३हाऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ६। प. ११। मा. ५) ३२ (कु।५६०)

(३३०।१) ॥ वैश्वदेवम्। विश्वेदेवास्त्रिष्टुबिन्द्रः॥

दिवया। ओवा। औऽ३होऽ३वा। उदुब्रह्मा। णीऽ३ऐर। तश्रवस्या॥ इन्द्र२समा। येऽ३मह।
यावसिष्ठा॥ आयोविश्वा। नीऽ३श्रव। साततानाः॥ दिवया। ओवा। औऽ३होऽ३वा। उपश्रोता।
मईव। तोऽ३४३। वाऽ३चाऽ५२साऽ६५६इ॥

(दी. ७। प. ११। मा. ३) ३३ (झि।५६१)

(३३१।१) ॥ पुरीषम्। अथर्वा त्रिष्टुबिन्द्रः॥

चक्रंयदस्याप्सुवानिषत्ताम्॥ उतोतदस्मैमध्विच्चछाऽ२३द्यात्। पृथिव्यामतिषितंयदूऽ२३धाः॥
पयोगोऽ२३षू। आदधाओषधीषु। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ९। प. ८। मा. ५) ३४ (दु।५६२)

सप्तदश द्वितीयः, दशमः खण्डः॥१०॥ दशतिः॥४॥

इति ग्रामे गेय-गानेऽष्टमः प्रपाठकः॥८॥

(३३२।१) ॥ तार्क्ष्यसामनी द्वे। तार्क्ष्यास्त्रिष्टुबिन्द्रः (तार्क्ष्यो वा)॥

त्यमूषू॥ वाजि। नाऽ२३४५म्। देवजूताऽ२३४म्। सहोवानंता। रुताऽ३। र२तथानाम्।
अरिष्टनाऽ२३४इमीम्। पृतनाऽ३४३जमाशुम्॥ स्वस्त। याइ॥ तार्क्ष्यमिहाऽ३४३।
हूऽ३वाऽ५इमाऽ६५६॥

(दी. ८। प. १३। मा. ८) १ (डै।५६३)

(३३२।२)

ईयइयाऽ३हाइ। त्यमूषुवाजिनाऽ३०देऽ३वजूतम्॥ ईऽ४यइया। हाऽ४इ। सहोवानंता।
रुताऽ३। र२रथानाम्॥ ईयइयाऽ३हाइ। अरिष्टऽ३। नाइ। मीऽ३०पृत। नाजमाशूम्॥
ईऽ४यइया। हाऽ२३४५इ। स्वस्त। याइ। तार्क्ष्यमिहाऽ३४३। हूऽ३वाऽ५इमाऽ६५६॥

(दी. १०। प. १८। मा. १४) २ (बी।५६४)

(३३३।१) ॥ इन्द्रस्य तातम्। इन्द्रस्त्रिष्टुबिन्द्रः॥

त्रातारमिन्द्रमविता। रमीऽ२३०द्राम्॥ हवेहवेसुहव२शूं। रमीऽ२३०द्राम्॥ हुवानुशक्रंपुरहू।
तमीऽ२३०द्राम्॥ इद२ह। वाइः। मघवा। वाऽ३४३इ। तूऽ३वाऽ५इन्द्राऽ६५६ः॥

(दी. ५। प. ११। मा. ९) ३ (पो।५६५)

(३३४।१) ॥ वार्त्रातुरम्। वृत्रतुरस्त्रिष्टुबिन्द्रः॥

यजामहोवा॥ आइन्द्रंवज्र। दक्षाऽ२३इणाम्। हरीणा२रथ्यंवि। व्रताऽ२३नाम्।
प्रश्मश्रुभिर्दोधुवत्। ऊऽ। ध्वाधाभूऽ२३४वात्॥ विसाइ। नाऽ। भिर्भयमानाऽ२३ः॥
वाऽ२३इराऽ३। धाऽ३४५सोऽ६हाइ॥

(दी. ४। प. १३। मा. १०) ४ (दौ।५६६)

(३३५।१) ॥ मारुतस्य धृषतः सामनी द्वे। धृषत्त्रिष्टुबिन्द्रः॥

सत्रा। हणाऽ३४औहोवा॥ दाधृषींतू। म्रमिन्द्राओऽ२३४वा। महामपारंवृषभ२ंसुवज्राऽ२३म्॥

हन्ताऽ२योऽ२३४वृ॥ त्रा२ंसनि। तोऽ३४३। ताऽ३वाऽ५जाऽ६५६म्॥

दातामघानिमघवाऽ२सुराधाऽ२३४५ः॥

(दी. ११। प. १०। मा. ५) ५ (डु।५६७)

(३३५।२)

सत्राहणंदाधृषिम्। तूऽ३४३०म्रमिन्द्रम्॥ महामपारंवृषभ२ंसुवज्राऽ२३म्॥ हन्तायोऽ२३४वृ॥

त्रा२ंसनि। तोऽ३४३। ताऽ३वाऽ५जाऽ६५६म्॥ दातामघानिमघवाऽ२सुराधाऽ२३४५ः॥

(दी. ९। प. ८। मा. ५) ६ (दु।५६८)

(३३६।१) ॥ आत्रम्। अत्रिस्त्रिष्टुबिन्द्रः॥

योनोवनुष्यन्नभिदा। तिमाऽ३२३४र्ताः॥ उगणावामन्यमानस्तुरोऽ२३वा।

क्षिधीयुधाशवसावातमाऽ२३इन्द्रा॥ अभाइष्याऽ३मा॥ वृषामाऽ३णाऽ३ः। त्वोऽ२३ताऽ३४३ः।

ओऽ२३४५इ॥ डा॥

(दी. १०। प. ९। मा. ६) ७ (भू।५६९)

(३३७।१) ॥ गृत्समदस्य मदौ द्वौ गार्त्समदे द्वे। गृत्समदस्त्रिष्टुबिन्द्रः॥

हाउयंवृत्रेषू। क्षितयाऽ३ः। स्पर्द्धमानाः। धमानाऽ३ः। ईऽ२३४यइया॥ हाउयंयुक्तेषु। तुरयऽ३।

तोहवन्ताइ। हवन्ताऽ३इ। ईऽ२३४यइया॥ हाउय२ंशूरसा। ताऽ३उयम। पामुपज्मान्।

उपज्माऽ३न्। ईऽ२३४यइया॥ हाउयंविप्रासाः। वाऽ३जय। ताइसइन्द्राः। सइन्द्राऽ३ः।

ईऽ२३४य। इयाऽ६। हाउवा॥ ईऽ२३४५॥

(दी. १२। प. २३। मा. २२) ८ (ज्रा।५७०)

(३३७।२)

यंयंया। हाउयंवृत्रेषू। क्षितयाऽ३ः। स्पर्द्धमानाः। धमानाः। यंयंयऽ२०याम्॥ यंयंया।

हाउयंक्तेषू। तुरयऽ३। तोहवंताइ। हवन्ते। यंयंयऽ२०याम्॥ यंयंया। हाउयश्शूरसा।

ताऽ३उयम। पामुपज्मान्। उपज्मन्। यंयंयऽ२०याम्॥ यंयंया। हाउयंविप्रासाः। वाऽ३जय।

ताइसइन्द्राः। सइन्द्रः। यंयंयऽ२०याम्। यंयंयाऽ६। हाउवा॥ ईऽ२३४५॥

(दी. १५। प. २७। मा. १२) ९ (फ्रा।५७१)

(३३८।१) ॥ वैश्वामित्रम्। विश्वामित्रस्त्रिष्टुबिन्द्रः (इन्द्रापर्वतौ वा)॥

इन्द्राहाउ। हाहोइ। पर्वताबृहतारथाऽ२इनाऽ२उवाऽ३। ऊऽ३४पा॥ वामीर्हाउ। हाहोइ।

इषआवहतश्सुवाऽ२इराऽ२उवाऽ३। ऊऽ३४पा॥ वीतश्हाउ। हाहोइ।

हव्यान्यध्वरेषुदाऽ२इवाऽ२उवाऽ३। ऊऽ३४पा॥ वर्द्धाहाउ। हाहो।

यांगीर्भिरिडयामदाऽ२०ताऽ२उवाऽ३॥ ऊऽ३२३४पा॥

(दी. १४। प. १६। मा. १५) १० (त्लु।५७२)

(३३९।१) ॥ सावित्राणि षड्गामानि (सवित्रम्)। षण्णां सविता त्रिष्टुबिन्द्रः॥

हाऽ३। हाइ। इन्द्रायगाइ। राऽ३अनि। शीतसर्गाः।१। असाउ। असाउ। इन्द्रायगाइ।

राऽ३अनि। शीतसर्गाः।२। कुवा। कुवा। इन्द्रायगाइ। राऽ३अनि। शीतसर्गाः।३। अयाम्।

अयाम्। अपःप्रैरा। याऽ३त्सग। रस्यबुध्नात्।४। अविदाऽ३त्। अविदत्। योअक्षेणाइ।

वाऽ३चक्रि। यौशचीभीः॥५॥ इहाऽ२३। ईऽ३४हा। विष्वक्तस्ता। भाऽ३पृथि। वीऽ३४३म्।

ऊऽ३ताऽ५द्याऽ६५६म्॥

(एवं षट् सामानि) (दी. ६। प. ३१। मा. २२) ११ (का।५७३)

(३४०।१) ॥ कुतीपाद वैरूपस्य साम। विरूपस्त्रिष्टुबिन्द्रः॥

आत्वासखायःसख्याववृत्यूः॥ तिरःपुरूचिदर्णवांजगाऽ२म्यौ। हौहोऽ३वा।

पितुर्नपातमादधीतवाऽ२इधौ। हौहोऽ३वा॥ अस्मिन्क्षयेप्रतरांदीदियाऽ२नौ। हौहोऽ३वा।

औहोऽ२॥ इहाऽ२३४५॥

(दी. ११। प. ९। मा. १२) १२ (धा।५७४)

(३४१।१) ॥ आमहीयवम्। अमहीयुस्त्रिष्टुबिन्द्रः॥

कोअद्ययुङ्क्तेधुरिगाऽऋतस्याऽ६ए॥ शिमीवतोभामिनोदुर्हृणाऽ२३यून्॥

आसन्नेषामप्सुवाहोमयोऽ२३भून्॥ यएषांभृत्यामृणधत्सजाइवाऽ२उवा३॥ ऊऽ३४पा॥

(दी. १५। प. ५। मा. ८) १३ (म्यै।५७५)

॥ त्रयोदश तृतीयः, एकादशः खण्डः॥११॥ दशतिः॥५॥

॥ इति त्रैष्टुबमैन्द्रम्॥

(३४२।१) ॥ शैखण्डिने द्वे। द्वयोः शिखण्ड्यनुष्टुबिन्द्रः॥

गायाऽ३१। तिब्राऽ३१२३४। गाय। त्राऽ३इणाः॥ अर्चाऽ३१। तियाऽ३१२३४। कम।

काऽ३इणाः॥ ब्रह्माऽ३१। णस्त्वाऽ३१२३४। शत। क्राऽ३ताऽ॥ उद्वाऽ३१। शमाऽ३१२३इ।

वयाऽ५इमिराइ। होऽ५इ॥ डा॥

(दी. २। प. १७। मा. ९) १४ (छो।५७६)

(३४२।२)

गायन्तिब्रोहाइ॥ गायात्रीऽ२३४णाः। अर्चन्त्यर्कमाऽ१र्कीऽ३णाः। अर्चन्तियोऽ२३४हा।

कमार्कीऽ२३४णाः॥ ब्रह्माणस्त्वाशताऽ१क्राऽ३तो। ब्रह्माणस्त्वोऽ२३४हाइ॥

शताक्राऽ२३४ताउ। उद्वꣳशमिवयाऽ१इमीऽ३रे। उद्वꣳशमोऽ२३४हाइ।

वयाऽ३इमाऽ५इराऽ६५६इ॥

(दी. ५। प. ११। मा. ११) १५ (पा।५७७)

(३४२।३) ॥ औद्वꣳशीयम्। विश्वेदेवानुष्टुबिन्द्रः॥

गायन्तिब्रागायत्रिणआ॥ अर्चन्त्यर्कमर्काऽ२३इणाः। ब्रह्माणस्त्वाऽ२होऽ१इ। शतक्राऽ२३ताउ।

उद्वꣳशमिवयाऽ१इमीऽ३रे॥ उद्वꣳशाऽ२३४मी॥ वायाऽ३२उवाऽ३। उप्।

माऽ२इरोऽ३५हाइ॥

(दी. ४। प. ९। मा. १०) १६ (धौ।५७८)

(३४३।१) ॥ शैखण्डिनानि त्रीणि। त्रयाणां शिखण्ड्यनुष्टुबिन्द्रः॥

इन्द्रंविश्वाः॥ आवीऽ२वृधान्। सामुद्रव्या। चासंगिराः। राथीतमाऽ३१उवाऽ२। रथाइनाऽ२म्॥

वाजानाऽ२३ꣳसात्॥ पातिंपतिम्। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ३। प. ११। मा. ९) १७ (टो।५७९)

(३४३।२)

ओइन्द्रंविश्वाः॥ अवी। वृधान्। साऽ१मूऽ२द्राव्याऽ२। चसम्। गिराः॥ राऽ१थीऽ२तामाऽ२म्।
रथी। नाम्॥ वाजाऽ२नाऽसाऽ२त्॥ पतिंपाऽ२३तीऽ३४३म्। ओऽ२३४५इ॥ डा॥

(दी. २। प. १३। मा. १०) १८ (जौ।५८०)

(३४३।३)

इन्द्रंविश्वाअवीवृधन्। समूद्राऽ२३४व्या॥ चाऽ३सांगीऽ३राः। राथीतमाऽ२म्। ऊऽ२।
हाऽ२इ। ऊऽ२। रथाइनाम्॥ वाजानाऽसाऽ२। ऊऽ२। हाऽ२इ। ऊऽ२॥
पतिंपाऽ२३तीऽ३४३म्। ओऽ२३४५इ॥ डा॥

(दी. ५। प. १५। मा. १०) १९ (मौ।५८१)

(३४३।४) ॥ आष्टादऽष्ट्रे द्वे। द्वयोरष्टादऽष्ट्रोऽनुष्टुबिन्द्रः॥

इन्द्रंविश्वाअवीवृधन्। ऐयाहाइ॥ समूद्राऽ१व्याऽ२। चसांगाऽ१इराऽ२३ः। ऐयाऽ२३हाइ॥
रथाइताऽ१माऽ२म्। रथाइनाऽ२३म्। ऐयाऽ२३हाइ॥ वाजानाऽ१ऽसाऽ२त्।
पताइंपाऽ१तीऽ२३म्। ऐयाऽ२३हाऽ३४३इ॥ ओऽ२३४५इ॥ डा॥

(दी. ६। प. १३। मा. १६) २० (गू।५८२)

(३४३।५)

इन्द्रंविश्वाअवीवृधन्नैयादौ। होऽ६वा॥ समुद्रव्यचसम्। गाइराऽ२३ः। ऐयाऽ२३त्।
औऽ२३होवा॥ रथाइतमꣳर। थाइनाऽ२३म्। ऐयाऽ२३त्। औऽ२३होवा॥
वाजानाꣳसत्पतिम्। पातीऽ२३म्। ऐयाऽ२३त्। औऽ२३होवाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. १४। प. १६। मा. १३) २१ (ति।५८३)

(३४३।६) ॥ महावैश्वामित्रे द्वे। द्वयोः विश्वामित्रोऽनुष्टुबिन्द्रः॥

हयाइ। हयाऽ३। ओहाओहा। (त्रीणि त्रिः)। इन्द्रंविश्वाः। अवीवार्द्धाऽ२न्॥ समुद्रव्या।
चसंगाइराऽ२ः॥ रथीतमम्। रथाइनाऽ२म्॥ वाजानाꣳसात्। पतिंपातीऽ२म्। हयाइ।
हयाऽ३। ओहाओहा॥ (त्रीणि त्रिः)। होऽ४इडा। होऽ४इडा। होऽ२३४५इ। डा॥

(दी. ५। प. ३०। मा. २४) २२ (मी।५८४)

(३४३।७)

हयायेऽ३। हयायेऽ३। हयाऽ२३४५। हꣳऽ२३। आऽ२३४इ। द्रंविश्वाअवी। वृधाऽ३न्।
साऽ२३४। मुद्रव्यचसम्। गिराऽ३ः॥ राऽ२३४। थीतमꣳरथी। नाऽ३म्॥ वाऽ२३४।
जानाꣳसत्पतिम्। पताऽ३इम्। हयायेऽ३। हयायेऽ३। हयाऽ२३४५। हꣳ२३४५॥
होऽ४इडा। होऽ४इडा। होऽ२३४५इ। डा॥

(दी. ६। प. २४। मा. १२) २३ (घा।५८५)

(३४४।१) ॥ वासिष्ठस्य प्रियाणि चत्वारि। वसिष्ठोऽनुष्टुबिन्द्रः॥

इममाऽ२३४इन्द्रा॥ सुतम्। पाऽ२इबाऽ२३४औहोवा। ज्येष्ठममाऽ२र्तियंमदम्। शुक्रा॥
स्यात्वाभिऽ३याऽ२३॥ क्षाऽ२राऽ२३४औहोवा॥ धाराऽ२ऋतस्यसादनेऽ२३४५॥

(दी. १०। प. ८। मा. ७) २४ (बे।५८६)

(३४४।२) ॥ गौतमम्। गोतमोऽनुष्टुबिन्द्रः॥

इममिन्द्रसुतंपिबा॥ ज्येष्ठाममा। तियंमदाऽ२म्। शुक्रा। औहोऽ२३४वा। स्यात्वाभ्यक्षरन्॥

धारा। औहोऽ२३४वा। ऋता। औहोऽ२३४वा॥ स्यसाऽ५दनाइ। होऽ५इ॥ डा॥

(दी. ६। प. १३। मा. ४) २५ (गी।५८७)

(३४४।३) ॥ वासिष्ठस्य प्रिये द्वे। द्वयोर्वसिष्ठोऽनुष्टुबिन्द्रः॥

इममिन्द्राऽ५सुतंपिबा॥ ज्येष्ठममऽ३र्त्तायमादाऽ२म्। औऽ२। हौऽ२। हुवाइ।

औऽ३होऽ२३४वा। शुक्रस्यत्वाऽ३भायक्षाराऽ२न्। औऽ२। हौऽ२। हुवाइ।

औऽ३होऽ२३४वा॥ धाराऽ१ऋताऽ२। औऽ२। हौऽ२। हुवाइ। औऽ३होऽ२३४वा॥

स्यसादाऽ२३नाऽ३४३इ। ओऽ२३४५इ॥ डा॥

(दी. ३। प. ११। मा. ८) २६ (ढै।५८८)

(३४४।४) ॥ वसिष्ठस्यप्रियम्॥

इममीऽ२३। द्रसुतंपिब। ज्येष्ठाम्॥ अमऽ३र्त्तायंमादाऽ२म्। शुक्रास्यत्वाऽ३।

भियाऽ२क्षाऽ२३४रान्॥ धाराओऽ२३४वा। आर्त्ताओऽ२३४वा॥ स्यसाऽ४दनाइ। होऽ५इ॥

डा॥

(दी. नास्ति। प. ११। मा. ७) २७ (हे।५८९)

(३४५।१) ॥ वींकानिचत्वारि, वीङ्के द्वे। द्वयोः गृत्समदोऽनुष्टुबिन्द्रः॥

यदिन्द्रोहाइ॥ चित्रमइहनाऽ२३। आऽ२३४। स्तित्वादा। हाऽ३इ। तमद्राइवाऽ२३ः।
राऽ२३४। धस्तन्नोविदा। हाऽ३। वाऽ। साउ॥ उभयाहाऽ२३॥ स्तियाउवाऽ३४३।
भाऽ३४५रोऽ६हाइ॥

(दी. ४। प. १४। मा. ८) २८ (धे।५९०)

(३४५।२)

यदिन्द्रचित्रमौहोवा॥ हाऽ२३४ना। अस्तित्वादातमोवाऽ३। ओवा। द्राऽ२३४इवाः॥
राधस्तन्नोविदोवाऽ३। ओवा। वाऽ२३४साउ॥ उभयाहस्तियोवाऽ३। ओवाऽ३४३।
भाऽ३४५रोऽ६हाइ॥

(दी. ६। प. ११। मा. ४) २९ (की।५९१)

(३४५।३) ॥ आकूपारं आकूपारमनादेशं वा। आकूपारोऽनुष्टुबिन्द्रः॥

यदिन्द्राऽ२३चित्र। मइहाऽ२३४ना॥ अस्ताऽ२इत्वादा। तमद्राइवो। राधस्तान्नाऽ२ः।
विदद्वसाउ॥ उभयाहाऽ२३॥ स्ताऽ२३याऽ३। भाऽ३४५रोऽ६हाइ॥

(दी. २। प. ९। मा. ६) ३० (झू।५९२)

(३४५।४) ॥ वींकम्॥

यदिन्द्रचित्रमइ। हनाऽ३। आस्ती॥ त्वादातमद्रिवः। राधस्ताऽ२३न्नाः। वीवीऽ२। दद्वसाउ॥
उभयाऽ२३हा॥ स्तायाऽ२३। भाऽ२३राऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ३। प. १२। मा. ५) ३१ (ठु।५९३)

॥ इति ग्रामे गेय-गाने नवमस्यार्द्धः प्रपाठकः॥

(३४६।१)        ॥ तैरश्चे द्वे। द्वयोः तिरश्चयनुष्टुबिन्द्रः॥

श्रुधी॥ हावाऽ२ऽहावाऽ२म्। तिरश्चियाः। इन्द्रयाऽ२३स्वा। सपौऽ३हो। यतीऽ३या॥

सुवीर्यस्यगोमताः॥ रायास्पूऽ२३र्धी॥ महाऽऽ२३। असियाऽ३४३। ओऽ२३४५इ॥ डा॥

(दी. ३। प. १२। मा. ४) १ (ठी।५९४)

(३४६।२)

श्रुधीहाऽ३वंतिरश्चियाः॥ इन्द्रायस्वा। सपर्यतायेऽ३४। सुवी। रिया।

स्याऽ२३४गा। माताऽ२ः॥ रायस्पूर्द्धीऽ३। हाऽ३हाइ॥ महाऽऽ५असीऽ। होऽ५इ॥ डा॥

(दी. २। प. १२। मा. ५) २ (छु।५९५)

(३४७।१)      ॥ महावैश्वामित्रम्। विश्वामित्रोऽनुष्टुबिन्द्रः सूर्यो वा॥

असाविसोमइन्द्रते। शाविष्ठाऽ२३४धृ५॥ ष्णो२ऽ३आगाऽ३ही। आत्वापृणाऽ२३हाऽ३।

क्तुईऽ२०द्राऽ२३४याम्॥ रजाः। सूर्यौवाओऽ२३४वा॥ नराऽ५श्मिभीः॥ होऽ५इ॥ डा॥

(दी. ४। प. १०। मा. ८) ३ (नै।५९६)

(३४८।१)        ॥ काण्वे द्वे। द्वयोः कण्वोऽनुष्टुबिन्द्रः॥

एन्द्राऽ३याहिहरिभाइः॥ उपाकण्वाऽ३। स्यासुष्टूऽ२३४तीम्। दिवोअमूऽ३।

ष्याशासाऽ२३४ताः॥ दाइवंययाऽ३१उवाऽ२३॥ दाऽ२३इवाऽ३। वाऽ३४५सोऽ६हाइ॥

(दी. ३। प. ८। मा. ९) ४ (डो।५९७)

(३४८।२)

एन्द्रयाहिहरिभिः। उहुवाहाइ॥ उपकण्वस्यसुष्टुतिम्। उहुवाऽ२३हाइ। दिवोअमूऽ३।

ष्याशासाऽ२३४ताः॥ दाइवंययाउ। वाऽ३॥ देऽ२३४वा। वसोऽ५हा। होऽ५इ॥ डा॥

(दी. ३। प. १२। मा. ९) ५ (ठो।५९८)

(३४९।१) ॥ वैश्वामित्रम्। स्विश्वामित्रोऽनुष्टुबिन्द्रः॥

आत्वागाऽ३इरोरथीरिवा॥ अंस्थुः सुतेऽ३षूगिर्वाणाऽ३ः। ओऽ३४वा। ओऽ२३४वा॥

अभित्वासऽ३मानूऽ१षाताऽ३। ओऽ३४वा। ओऽ२३४वा॥ गावोवाऽ३त्साऽ३म्॥

नधोऽ२३४वा। नाऽ५वोऽ६हाइ॥

(दी. ७। प. १०। मा. ४) ६ (ञी।५९९)

(३५०।१)॥ शुद्धाशुद्धीये द्वे (पदान्त निधनंशुद्धाशुद्धीयम्)। द्वयोः इन्द्रोऽनुष्टुबिन्द्रः॥

एतोन्विन्द्रꣳस्तवामा॥ शुद्धꣳशुद्धेनसाऽ२३म्ना। शुद्धैरुक्थैर्वावृध्वाऽ२३ꣳसाम्॥

शुद्धैराऽ२३शीऽ३॥ र्वाऽ२न्। ममाऽ३४औहोवा॥ तूऽ२३४५॥

(दी. १०। प. ७। मा. ३) ७ (फि।६००)

(३५०।२) ॥ ऐडँशुद्धाशुद्धीयम्॥

एतोन्विन्द्रꣳस्तवाऽ६मा॥ शुद्धꣳशुद्धे। न। साम्नाऽ२। शुद्धाइरूऽ३क्थाऽ३इः।

वावाऽ२र्ध्वाऽ२३४ꣳसाम्॥ शुद्धैराऽ२३शी॥ र्वान्ममत्तु। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥

डा॥

(दी. ४। प. ११। मा. ५) ८ (तु।६०१)

(३५१।१) ॥ रयिष्ठे द्वे। द्वयोः गोतमोऽनुष्टुबिन्द्रः॥

